यम् । इत्यमरः । ३ । ३ । ५७ ॥ (यथा गीतायां १८ । १४ ।
"अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम्" ॥)
हेतुः । कर्म्म । हस्तलेपः । नृत्यप्रभेदः । गीतविशेषः । (तले व्यवस्थापकस्ताड़नविशेषः ।
यदुक्तं राजकन्दर्पेण ।
"नृत्यवादित्रगीतानां प्रयोगवशभेदिनां ।
संस्थानं ताड़नं रोधः करणानि प्रचक्षते" ॥
अस्य प्रमाणं यथा कुमारे ६ । ४० ।
"शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः" ॥)
क्रियाभेदः । संवेशनम् । कायस्थः । इति मेदिनी ॥
कायस्थसंहतिः ॥ वर्णानां स्पृष्टतादि । योगिनामासनादि । क्षतादि । इति हेमचन्द्रः ॥ (सर्व्वेषामादिकारणत्वात् विष्णुः । यथा, महाभारते १३ । १४९ । ५४ ।
"कारणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" ॥
लेख्यपत्रसाक्षिदिव्यादि । यथा मनुः ८ । ४१ ।
"अर्थेऽपव्ययमानन्तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः" ॥
भावे ल्युट् । कृतिः । यथा रामायणे ४।१७।५६ ॥
"धर्म्मतः प्रेक्षकरणे प्रतीच्छियामहे वयम्" ॥)
करणः, पुं, शूद्राविशोर्ज्जातजातिविशेषः । इत्यमरः । २ । १० । २ ॥ अयं लिखनवृत्तिः कायस्थ इति ख्यातः । इति भरतः ॥ यथा,—
"शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः" ।
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥ * ॥
अपि च ।
"कायस्थे साधने क्लीवं पुंसि शूद्राविशोः सुते" ।
इति करणशब्दार्थे मेदिनी ॥ * ॥ अन्यच्च ।
"झल्लो मल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसद्रविड़ एव च" ॥
इति मानवे १० । २२ ॥ झल्लोमल्लश्चेति । "क्षत्रियात् व्रात्यात् सवर्णायां झल्लमल्लनिच्छिविनटकरणखसद्रविड़ाख्या जायन्ते । एतान्यपेकस्यैव नामानि" । इति तट्टीकायां कुल्लूकभट्टः ॥ * ॥
तस्य कर्म्मविपाको यथा,—
"चैत्रचौरस्तैलकीटो मूर्द्धि कीटस्त्रिजन्मकम् ।
ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः ॥
ततःशुद्धे वर्षशतं स्थित्वा स्वर्णवणिक् भवेत् ।
जन्मैकञ्च दुराचारो जन्मैकं करणो भवेत् ॥
विश्वेकलिपिकर्त्ता च भक्ष्यदातुर्धनं हरेत् ॥
कायस्थेनोदरस्थेन मातुर्म्मांसं न खादितम् ।
तत्र नास्ति कृपा तस्य दन्ताभावेन केवलम् ॥
स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर ।
नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले ॥
हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम् ।
शतेषु सज्जनः कोऽपि कायस्थो जैतरौ च तौ ॥
सुबुद्धिः शिवयुक्तिश्च शास्त्रज्ञो धर्म्ममानसः ।
न विश्वसेत्तेषु तात स्वात्मकल्याणहेतवे" ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८५ अध्यायः ॥
करणत्राणं, क्ली, (करणं ज्ञानकर्म्मादिरूपं इन्द्रियं त्रायतेऽनेन । करण + त्रै + करणे + ल्युट् । मस्तकस्य प्रधानकरणैकाश्रयस्य मनसः स्थलत्वात् । करणैर्हस्तादिकर्म्मेन्द्रियादिभिः त्रायते वा इति कर्म्मणि ल्युट् ।) मस्तकम् । इति हेमचन्द्रः ॥
करणीयं, त्रि, (कर्त्तुमुचितं कर्त्तुमर्हं वा । कृ + अनीयर् ।) कर्त्तव्यम् । कार्य्यम् । इति व्याकरणम् ॥
(यथा रामायणे ३ । १४ । १० ।
"मया किं करणीयञ्च इत्युक्ते द्विजसन्निधौ ।
सर्व्वैरेव च तैरार्त्तैर्वाणिगियं समुदाहृता" ॥)
करण्डः, पुं, (कृञ्+"कृञ्करण्डच" । इत्यण्डन् । उणां ।१।१२८ ।) मधुकोषः । मौचाक् इति भाषा ।
असिः । कारण्डवपक्षी । दलाढ़कम् । इति मेदिनी हेमचन्द्रश्च ॥ वंशादिरचितभाण्डविशेषः समुद्गश्च ।
इत्यमरः । ३ । ५ । १८ ॥ साजि झाँपि इत्यादि भाषा । (यथा भागवते ५ । १४ । ४ । "एवमेव गृहाश्रमः कर्म्मक्षेत्रं यस्मिन् न हि कर्म्माण्युत्सीदन्ति यदयं कामकरण्ड एव व्यावसथः" ॥)
करण्डी, [न्] पुं (करण्डस्येव आकारोऽस्यास्तीति । करण्ड + इनिः ।) मत्स्यः । इति त्रिकाण्डशेषः ।
(मत्स्यशब्देऽस्य गुणादिकथनं ज्ञेयम् ॥)
करतलः, पुं, (करस्य हस्तस्य तलः ।) हस्ततलः ।
हातेर तेलो इति भाषा । (यथा । जयदेवः ।१।४५।
"करतलतालतरलवलयावलिकलितलखनवंशे"
अपि च । यथा, श्रीभागवते । ८ । ७ । ४२ ॥
"ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन् महादेवः कृपया भूतभावनः" ॥)
करतालं, क्ली, (कराभ्यां हस्ताभ्यां दीयमानस्तालो यत्र ।) वाद्यविशेषः । यथा,—
"शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् ।
दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत्" ॥
झल्लकं कांस्यनिर्म्मितकरतालकम् । इति तिथ्यादितत्त्वे रघुनन्दनभट्टाचार्य्येण व्याख्यातम् ॥
करताली, स्त्री, (करताल + गौरादित्वात् ङीष् ।)
वाद्यविशेषः । करताल खरताल इति ख्याता ।
तत्पर्य्यायः । करर्द्धिः २ । इति त्रिकाण्डशेषः ॥
करतलध्वनिः । तथा च । "यथा न स्यादाली-कपटकरतालीपटुरवः" । इति उद्भटः ॥
करतोया, स्त्री, (करात् शङ्करस्य हस्तात् च्युतं तोयं जलं अस्ति यत्र । अर्श आद्यच् ।) स्वनामख्यातउत्तरदेशस्थनदीविशेषः । तत्पर्य्यायः । सदानीरा २ । इत्यमरः । १ । १० । ३३ ॥ सदानीरवहा ३ ।
इति शब्दरत्नावली ॥ * ॥ गौरीविवाहसमये शङ्करकरगलितसंप्रदानतोयप्रभवत्वात्करस्य तोयं विद्यतेऽत्र इति करतोया । श्रावणे एतदन्यं सर्व्वा नद्यो रजस्वलाः इयं तु न रजस्वला अत एव सदा सर्व्वदा नीरमस्या इतिसदानीरा ।
तथा च स्मृतिः ।
"अषाढादौ कर्कटे देवी त्र्यहं गङ्गा रजस्वला ।
सर्व्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी" ॥
इत्यमरटीकायां भरतः ॥ (इयं हि तीर्थविशेषः ।
यथा महाभारते ३ । तीर्थयात्रापर्व्वणि ।८५। ३ ॥
"करतोयां समासाद्य त्रिरात्रोपषितो नरः ।
अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः" ॥)
करद्रुमः, पुं, (किरति शाखाः सर्व्वतः यः । स चासौ द्रुमश्चेति ।) कारस्करवृक्षः । इति राजनिर्घण्टः ॥
करपत्रं, क्ली, (करेण त्रायते वा पततीति । पत + "सर्व्वधातुभ्यः ष्ट्रन्" इति ष्ट्रन् ।) क्रकचः । इत्यमरः । २ । १० । ३५ ॥ करात् इति भाषा । (करौ पत्रमिव नौरिव यत्र ।) जलक्रीड़ा । इति जटाधरः ॥
करपत्रवान्, [त्] पुं, (करपत्राकारपत्रमस्ति यस्मिन् मतुप् मस्य वः ।) तालवृक्षः । इति शब्दचन्द्रिका ॥
करपत्रिका, स्त्री, (करौ पत्रं नौरिव यस्याः । पत्र + कप् + टाप् + अत इत्वम् ।) जलक्रीड़ा । इति जटाधरः ॥
करपर्णः, पुं, (करो हस्तः तदृत्पर्णं यस्य ।) भिण्डावृक्षः । रक्तैरण्डः । इति राजनिर्घण्टः ॥ (एरण्डशब्देऽस्य विशेषः उक्तः ॥)
करपल्लवः, पुं, (करस्य पल्लव इव ।) अङ्गुलिः । यथा, मार्कण्डेये ८४ । २६ ।
"करपल्लवसङ्गीनि तैरस्मानपि सर्व्वतः" ॥
करपात्रं, क्ली, (करः पात्रमिव यत्र ।) जलक्रीड़ा ।
इति हारावली ॥
करपालः, पुं, (करं पालयति रक्षति । पाल + कर्म्मण्यण् ।) खड्गः । इत्यमरः । २ । ८ । ८९ ॥
करपालिका, स्त्री, (करपाल् + ण्वुल् + टाप् अत इत्वम् ।) क्षुद्रगदाकारहस्तदण्डः । सोँटा इति ख्यातः । इति भरतः । एकधारखड्गम् । इति स्वामी । तत्पर्य्यायः । इली २ । इत्यमरः । २ । ८।९१ ॥ इली ३ इलिः ४ करवालिका ५ । इति तट्टीका ॥
करबालः, पुं, (करस्य बालः पुत्र इव । नखस्य करजातत्वात् तथात्वम् ।) नखम् । इति शब्दमाला ॥
(करं वलति संवृणोति वल + अण् ।) खड्गः ।
इत्यमरटीकायां भरतादयः । करवाल इति भाषा ।
(यथा, गीतगोविन्दे । १ । १० ॥
"म्लेच्छनिवहनिधने कलयसि करवालम्" ॥)
करबालिका, स्त्री, (कर + बल + ण्वुल् + टाप् + अत इत्वम् ।) करपालिका । इत्यमरटीकायां रायमुकुटादयः ॥
करभः, पुं, (कृणाति कीर्य्यतेऽनेन वा । कॄ हिंसायां कॄ विक्षेपे वा "कॄशृशलिकलिगर्द्दिभ्योऽभच्" । उणां ।३।१२२ । इति अभच् । करे भाति शोभते इति वा । भा + कः ।) मणिबन्धावधिकनिष्ठापर्य्यन्तं करस्य बहिर्भागः । (यथा, रघुः । ६ । ८३ ।
"धात्री कराभ्यां करभोपमोरुः" ॥)
उष्ट्रशिशुः । इत्यमरः । २ । ९ । ७५ ।
करिशावकः । इत्यमरटीकासारसुन्दरी ॥ (यथा भागवते ८।२।२२ ।
"सघर्म्मितप्तः करिभिः करेणुभि-
र्वृतोमदच्युत्करभैरनुद्रुतः" ॥)
उष्ट्रः । इति मेदिनी ॥ नखनामगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥ कटिः । इति जटाधरः ॥
करभकाण्डिका, स्त्री, (करभप्रियं काण्डमस्याः ।

करभकाण्ड+कप्+अत इत्वम्।) उष्ट्रकाण्डीवृक्षः। इति राजनिर्घण्टः॥

करभप्रिया, स्त्री, (करभस्य करिशावकस्य उष्ट्रस्य वा प्रिया।) क्षुद्रदुरालभा। इति राजनिर्घण्टः॥

करभवल्लभः, पुं, (करभस्य हस्तिशावकस्य वल्लभः प्रियः।) कपित्थवृक्षः। पीलुवृक्षः। इति राजनिर्घण्टः॥

करभादनी, स्त्री, (करभेन उष्ट्रेन अद्यतेऽसौ। अद्+कर्म्मणि ल्युट्। ततो+ङीप्।) क्षुद्रदुरालभा। इति राजनिर्घण्टः॥

करभी, [न्] पुं, (कर इव भाति करभः शुण्डः स अस्यास्ति। करभ+इनिः। यद्वा करभः हस्तावयवविशेषः सोऽस्य शुण्डावच्छेदे अस्तीति इनिः।) हस्ती। इति राजनिर्घण्टः॥

करभी, स्त्री, (करभ+ङीप्।) उष्ट्री। तत्पर्य्यायः। वामी २। इति जटाधरः॥

करभीरः, पुं, (करभिणं हस्तिनं ईरयति प्रेरयति मृत्युमुखम्। करभि+ईर्+अण्।) सिंहः। इति शब्दरत्नावली॥

करभूषणं, क्ली, (करयोर्भूषणम्।) कङ्कणम्। इत्यमरः।२।६।१०८॥ हस्ताभरणमात्रञ्च॥

करमट्टः, पुं, (करं करिशुण्डमपि चट्टति तुच्छीकरोति। अस्य सरलकाण्डत्वात् तथात्वम्। चट्ट अनादरे+खमुम् प्रत्ययः।) गुवाकवृक्षः। इति त्रिकाण्डशेषः॥ (गुवाकशब्देऽस्य गुणा ज्ञातव्याः॥)

करमरी, [न्] पुं, (किरति क्षिपति अत्र दस्यून् इति करः कारागारः। कॄ+अधिकरणे अप्। तस्मिन् करे मरः मरणं मृत्युवत् यातना यस्य बाहुलकात् इनिः। तत्र म्रियते वा।) वन्दी। इति त्रिकाण्डशेषः। कयेदी इति भाषा॥

करमर्द्दः, पुं, (करं मृद्गातीति। करकण्डूप्रदत्वात्। मृद् क्षोदे+कर्म्मण्यण्। करेण मृद्यते इति कर्म्मणि अप् वा।) करमर्द्दकवृक्षः। इति शब्दरत्नावली॥ (यथा भावप्रकाशे,—अस्य गुणा उक्ताः।
"लघुदीर्घफलाभ्यान्तु करमर्द्दद्वयं मतम्।
करमर्द्दद्वयं त्वाममम्लं गुरुतृषापहम्॥
उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम्।
तत्पक्वं मधुरं रुच्यं लघुपित्तसमीरजित्॥
करमर्द्दः सुषेणः स्यात् कृष्णपाकफलस्तथा।
तस्माल्लघुफलायास्तु सा ज्ञेया करमर्द्दिका॥)

करमर्द्दकः, पुं, (कर+मृद्+ण्वुल्। करमर्द्द एव स्वार्थे कन् इति वा।) वृक्षविशेषः। इत्यमरटीकासारसुन्दरी। पाणि आमला इति भाषा॥ इति रत्नमालाराजनिर्घण्टादयः। करौन्दा इति करमचा इति च भाषा॥ तत्पर्य्यायः। कृष्णपाकफलः २ अविग्नः ३ सुषेणः ४। इत्यमरः।२।४।६७॥ कृष्णपाकः ५ पाकफलः ६ कृष्णफलः ७ पाककृष्णफलः ८ कृष्णफलपाकः ९ पाककृष्णः १० फलकृष्णः ११ पाकफलकृष्णः १२ वनालयः १३ वलालकः १४ करामर्द्दकः १५ बोलः १६ वग्नः १७ आविग्नः १८। इति तट्टीकायां भरतः॥ करमर्द्दी १९ वनेक्षुद्रा २० कराम्लः २१। इति रत्नमाला॥ करमर्द्दः २२ पाणिमर्द्दः २३। तद्बालफलगुणाः। तिक्तत्वम्। अम्लत्वम्। दीपनत्वम्। दाहदात्वञ्च। तत्पक्वफलगुणाः। त्रिदोषप्रशमनत्वम्। अरुचिविषनाशित्वञ्च। इति राजनिर्घण्टः॥ पिपासानाशित्वम्। अम्लत्वम्। रुचिपित्तकारित्वम्। गुरुत्वञ्च। इति राजवल्लभः॥ (यथा, वाभटः।
"गुरूष्णवीर्य्यं वातघ्नं सरञ्च करमर्द्दकम्"॥)

करमर्द्दी, स्त्री, (करं मृद्गातीति। कर+मृद्+अण् ङीप्।) करमर्द्दकवृक्षः। इति रत्नमाला॥

करमालः, पुं, (करः करिशुण्डः तदाकारा माला समूहः यस्य मेघस्य धूमस्य वा क्रमशः करिशुण्डवत् प्रसरत्वात् तथात्वम्।) खतमालः। धूमः। इति हेमचन्द्रः॥

करमाला, स्त्री, (कराङ्गुलीभिर्मालयेव जपनात् कररूपा माला। कराङ्गुल्य मालेव वा।) करपर्व्वरूपमाला। यथा,
"अनामिकात्रयं पर्व्व कनिष्ठात्रितयं तथा।
तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता"॥
इति मुण्डमालातन्त्रे सामान्यविषयम्॥ *॥
"तर्ज्जनी मध्यमानामा कनिष्ठा चेति ताः क्रमात्।
तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका।
पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्"॥ *॥
इति शिवरहस्यीयं शक्तिभिन्नविषयम्॥ *॥
"अनामामूलमारभ्य कनिष्ठादिक्रमेण तु।
तर्ज्जनीमध्यपर्य्यन्तमष्टपर्व्वसु संजपेत्"॥
इति सनत्कुमारसंहितावचनं शक्तीतरेषामष्टवारविषयम्॥ *॥
"अनामिकात्रयं पर्व्व कनिष्ठा च त्रिपर्व्विका।
मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्विका॥
करमाला समाख्याता आरभ्यानामिकान्तरात्।
तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्"॥
इति शक्तिविषये मुण्डमालातन्त्रम्॥ *॥ तथा।
"अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु।
मध्यमामूलपर्य्यन्तं जपेदष्टसु पर्व्वसु"॥
इदमपि शक्तिविषये अष्टवारपरम्। इति श्यामारहस्यम्॥

करमुक्तं, क्ली, (करेण सुदृढं धृत्वा शत्रुं प्रति मुच्यते। कर+मुच्+कर्म्मणि क्तः।) अस्त्रविशेषः। इति हलायुधः। वरछी भाला इत्यादि भाषा॥

करम्बः, पुं, (क्रम् करणे+"क्वादि कडीत्यम्च"। उणां।४।८२।) करम्भः। इत्यमरटीकायां नीलकण्ठः॥ मिश्रिते त्रि। इति हेमचन्द्रः॥

करम्बितः, त्रि, (करम्बः मिश्रणं जातोऽस्य। करम्ब+इतच्।) मिश्रितः। खचितः। इति त्रिकाण्डशेषः॥
("ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे"॥
इति गीतगोविन्दे।१।२॥)

करम्भः, पुं, (केन जलेन रभ्यते मिश्रीक्रियते। रभिधातोरनेकार्थत्वात् "अकर्त्तरि चेति" घञ्।३।३।१९। रभेरशब्लिटोः।७।१।६३। इति नुम्।) दधिमिश्रितशक्तुः। इत्यमरः।२।९।४८॥ (यथा शतपथब्राह्मणे।२।५।२।४।
"अनुषानिव यवान् कृत्वा तानीषदीवोपतप्य तेषां करम्भपात्राणि कुर्व्वन्ति"॥ उदमन्थः। यथा, यजुर्व्वेदे १९।२१।
"धानाः करम्भः सक्तवः परिवापः पयोदधि"।
"करम्भः उदमन्थः" इति वेददीधितिः॥
भक्ष्ययवमात्रम्। यथा मनुः १२।७६।
"करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्"
करम्भवालुकातापान् करम्भैर्यवैः सह भक्ष्या या वालुकाः तदत्तप्तवालुकादीन् इत्यर्थः॥ मिश्रगन्धः। यथा भागवते ३।२९।४५।
"करम्भपूतिसौरभ्य शान्तोदग्रादिभिः पृथक्।
द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते"॥)

करम्भकं, क्ली, (करम्भ एव स्वार्थे कन्।) करम्भः दधिसक्तवः। तत्पर्य्यायः। कर्कसारम् २। इति हारावली॥

करम्भा, स्त्री, (केन जलेन रभ्यते सिच्यते इति। अथवा केन वायुना रभ्यते मिश्रीक्रियते नानागन्धो यस्याः। रभेर्नानार्थत्वात् क+रभ+घञ्+नुम् टाप् च।) शतावरी। प्रियङ्गुवृक्षः। इति राजनिर्घण्टः॥ (स्वनामख्याता कलिङ्गदेशोत्पन्ना रमणी। सा तु पूरुवंशीयस्याक्रोधनस्य पत्नी। यथा महाभारते १।९५।२२।
"अक्रोधनः खलु कालिङ्गीं करम्भां नामोपयेमे। तस्यामस्य जज्ञे देवातिथिः"॥)

कररुहः, पुं, (करे रोहति कराङ्गुलीभ्य उत्पद्यते इत्यर्थः। कर+रुह+"इगुपधेति"।३।१।१३४। कः।) नखः। इत्यमरः।२।६।८३॥ (यथा आर्य्यासप्तशती ३७। "यस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः"॥)

करर्द्धिः, स्त्री, (करस्य ऋद्धिः करेण ऋद्धिर्यस्य वा। करसम्पत्।) करतालो। इति त्रिकाण्डशेषः॥

करवालिका, स्त्री, (करं वलते। वल हिंसादानयोः अण्। करेण वाल्यते वा। णिजन्तादच् इः ततः कन्+टाप् च।) करपालिका। इत्यमरटीकायां भरतः॥

करवी, स्त्री, (कस्य वायोः रवो यत्र। गौरादित्वात् ङीष्।) कवरी। हिङ्गुपत्रम्। इति शब्दचन्द्रिका॥

करवीरः, पुं, (करं वीरयति। वीर+विक्रान्तौ+कर्म्मण्यण्।) खड्गः। दैत्यविशेषः। इति मेदिनी॥ श्मशानम्। इति हेमचन्द्रः॥ ब्रह्मावर्त्ते दृषद्वतीनदीतीरे चन्द्रशेखरराजपुरम्। इति कालिकापुराणे ४९ अध्यायः॥ (पर्व्वतविशेषः। यथा, भागवते ५।१६।२८।
"एवमपरेण पवनपारियात्रौ दक्षिणेन कैलास करवीरौ प्रगायतौ"॥
नागविशेषः। यथा, महाभारते १।३५।१२।
"करवीरः पुष्पदंष्ट्रो विल्वको विल्वपाण्डरः"॥)
वृक्षविशेषः। करवी इति भाषा॥ (यथा रामायणे ३।१७।१०।
"दाड़िमान् करवीरांश्च अशोकांस्तिलकांस्तथा"॥)
तत्पर्य्यायः। प्रतिहासः २ शतप्रासः ३ चण्डातः ४ हयमारकः ५। इत्यमरः।२।४।७६॥ प्रतीहासः

६ । इति तट्टीका ॥ अश्वघ्नः ७ हयारिः ८ अश्वमारकः ९ शीतकुम्भः १० तुरङ्गारिः ११ । इति रत्नमाला ॥ अश्वहा १२ वीरः १३ हयमारः १४ हयघ्नः १५ शतकुन्दः १६ अश्वरोधकः १७ वीरकः १८ कुन्दः १९ शकुन्दः २० श्वेतपुष्पकः २१ अश्वान्तकः २२ नखराह्वः २३ अश्वनाशनः २४ स्थलकुमुदः २५ दिव्यपुष्पः २६ हरिप्रियः २७ गौरीपुष्पः २८ सिद्धपुष्पः २९ । अस्य गुणाः । कटुत्वम् । तीक्ष्णत्वम् । कुष्ठकण्डूतिनाशित्वम् । व्रणार्त्तिविषविस्फोटकशमनत्वम् । अश्वमृतिप्रदत्वञ्च । इति राजनिर्घण्टः ॥ (श्वेतरक्तभेदेन यथा,

"करवीरः श्वेतपुष्पः शीतकुम्भोऽश्वमारकः ।
द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् ।
व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ।
वीर्य्योष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम्" ॥

इति भावप्रकाशः ॥ नागविशेषः । इति भारतम् ॥)

करवीरकः, पुं, (करवीर इव कायति प्रकाशते । कै + कः । करं वीरयतीति । कर + वीर विक्रान्तौ + ण्वुल् ।) अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥ खड्गः । इति शब्दमाला ॥ (करवीर एव स्वार्थे कन् ।) करवीरः । विषभेदः । स तु करवीरस्य मूलम् । इति हेमचन्द्रः ॥

करवीरकन्दसंज्ञः, पुं, (करवीरकन्दसंज्ञया संज्ञा यस्य । करवीरकन्द इति संज्ञा यस्य वा ।) तैलकन्दः । इति राजनिर्घण्टः ॥

करवीरभुजा, स्त्री, (करवीरस्य भुज इव शाखावत् भुजः शाखाऽस्याः ।) आढ़कीवृक्षः । ।इति राजनिर्घण्टः ॥ अरहर इति भाषा ॥

करवीरी, स्त्री, (किरति क्षिपति राक्षसासुरादीन् इति । कॄ + अच् । करः तादृशः वीरः पुत्त्रो यस्याः । यद्वा कं सुखं राति ददातीति क + रा + कः । सुखप्रदः वीरपुत्त्रो यस्याः ।) अदितिः । श्रेष्ठगवी । पुत्त्रवती । इति मेदिनी ॥

करशाखा, स्त्री, (करस्य शाखा इव ।) अङ्गुली । इत्यमरः । २ । ६ । ८१ ॥ तासां परिमाणं यथा ।

"अष्टभिस्तैर्भवेत् ज्येष्ठं मध्यमं सप्तभिर्यवैः ।
कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम ॥
मानन्तु पार्श्वेन । षड्यवाः पार्श्वसम्मिताः । इति कात्यायनदर्शनात्" । इति तिथ्यादितत्त्वम् ॥

तत्पर्य्यायः । अग्रुवः १ अण्व्यः २ क्षिपः ३ विशः ४ शर्य्याः ५ रशनाः ६ धीतयः ७ अथर्य्यः ८ विपः ९ कक्ष्याः १० अवनयः ११ हरितः १२ स्वसारः १३ जामयः १४ सनाभयः १५ योक्त्राणि १६ योजनानि १७ धुरः १८ शाखाः १९ अभीशवः २० दीधितयः २१ गभस्तयः २२ । इति द्वाविंशतिरङ्गुलिनामानि । इति वेदनिघण्टौ २ अध्यायः ॥

करशीकरः, पुं, (करात् करिशुण्डात् निःसृतः शीकरः । करस्य गजशुण्डस्य शीकरो वा ।) हस्तिशुण्डनिर्गतजलकणा । तत्पर्य्यायः । वमथुः २ । इत्यमरः । २ । ८ । ३७ ॥ (यथा रघुः । ७ । ४८ ।

"उद्यन्तमग्निं शमयाम्बभूवुर्गजा विविग्नाः करशीकरेण" ॥)

करशूकः, पुं, (करस्य शूकः सूक्ष्माग्र इव सूक्ष्माग्र इव वा ।) नखः । इति त्रिकाण्डशेषः ॥

करहाटः, पुं, (करेण किरणेन सूर्य्यस्येति यावत् हाट्यते दीप्यते इति । हट + णिच् + कर्म्मणि घञ् ।) पद्ममूलम् । मदनवृक्षः । इति मेदिनी ॥ महापिण्डीतरुः । इति राजनिर्घण्टः ॥

करहाटकः, पुं, (करहाट एव इति स्वार्थे कन् । करं हाटयतीति ण्वुल् वा ।) मदनवृक्षः । इत्यमरः । २ । ४ । ५२ ॥ हस्तोयस्वर्णे क्ली ॥

करामर्द्दः, पुं, (करं आमृद्नातीति । कर + आ + मृद् + अण् ।) करमर्दवृक्षः । इति शब्दरत्नावली ॥ करञ्चा इति भाषा ॥

कराम्बुकः, पुं, (कीर्य्यते क्षिप्यते । कॄ + कर्म्मणि अप् । करं अम्बु यस्मात् कप् ।) कृष्णपाकफलवृक्षः । इति शब्दचन्द्रिका भरतधृतवाचस्पतिश्च ॥ पाणि आमला इति भाषा ॥

कराम्लकः, पुं, (कीर्य्यते इति करं कीर्य्यमाणं अम्लं यतः । अम्ल + कप ।) करमर्द्दकवृक्षः । इति राजनिर्घण्टः ॥

करायिका, स्त्री, (कराविव आचरति उड्डीनादिकाले करवल्लम्बमानत्वात्तथात्वम् । कर + आचारे क्यङ् । ततो + ण्वुल् + टाप् च ।) वलाकापक्षी । क्षुद्रवकः । इति भूरिप्रयोगः ॥

करारोटः, पुं, (करे आरोटते दीप्यते । आ + रुट् + अच् ।) अङ्गुरीयकम् । इति त्रिकाण्डशेषः ॥

करालं, क्ली, (कराय चक्षुरोगादिनाशाय अलति पर्य्याप्नोतीति । अल् + अच् ।) कृष्णकुठेरकः । इति मेदिनी ॥ काल तुलसी इति भाषा ॥

करालः, पुं, (करं आलाति गृह्णाति । आ + ला + कः । कराय क्षेपाय अलति पर्य्याप्नोति वा ।) सर्जरसयुक्ततैलम् । इति मेदिनी ॥ गर्जनतेल इति भाषा ॥ तैले घृते वा पक्ववेसवारः । इति पाकराजेश्वरः ॥ (क्वचित् क्लीवेऽपि दृश्यते । यथा,

"तप्तस्नेहे पचेत् पूर्व्वं वेसवारकसंज्ञकम् ।
पाकप्रापितसौरभ्यं करालं सूदकैर्मतम्" ॥

गन्धर्व्वभेदः ॥ यथा, महाभारते । १ । १२३ । ५४ ।

"सद्वा वृहद्वा वृहकः करालश्च महामनाः" ॥)

करालः, त्रि, (कराय क्षेपाय भयप्रदर्शनाय अलति पर्य्याप्नोति ।) दन्तुरः । दाँता इति भाषा ॥ (यथा,

"कराल वदनां घोरां मुक्तकेशीं चतुर्भुजां" ।

इति चामुण्डाध्यानम् ।) तुङ्गः । उच्च इति भाषा ॥ भीषणः । इति मेदिनी ॥ भयानक इति यावत् ॥ (यथा, रघुः । १२ । ९८ ।

"तद्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम्" ॥)

करालकः, पुं, (कराल एव स्वार्थे कन् । करालवत् कायति वा ।) कृष्णतुलसी । इति रत्नमाला ॥ करालशब्दार्थश्चात्र ॥

करालत्रिपुटा, स्त्री, (करालानि त्रीणि पुटानि यस्याः ।) लङ्काधान्यम् । इति राजनिर्घण्टः ॥

करालि[illegible] शारिवा । अनन्तमूल इति ख्याता । इति रत्नमाला ॥ (शारिवाशब्दे अस्या गुणा व्याख्येयाः ॥)

करालिकः, पुं, (कराणां करसदृशशाखानां आलिः श्रेणिर्यत्र । कप् ।) वृक्षः । इति हेमचन्द्रः ॥

कराली, स्त्री, (कराल + गौरादित्वात् ङीष् ।) अग्नेः सप्तजिह्वान्तर्गतजिह्वाविशेषः । इति जटाधरः ॥ (यथा मुण्डकोपनिषदि । १ । २ । ४ ।

"काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी
लेलायमाना इति सप्त जिह्वाः" ॥)

करिकणावल्ली, स्त्री, (करिकणाया इव वल्ली ।) चविकावृक्षः । इति राजनिर्घण्टः । चइ इति भाषा ॥ (चविकाशब्देऽस्या विशेषो ज्ञेयः ॥)

करिकुसुम्भः, पुं, (करीति नागकेशरः तद्वत कुसुम्भः ।) नागकेशरचूर्णकम् । इति हारावली ॥

करिगर्ज्जितं, क्ली, (करिणः गर्ज्जितं गर्ज्जनं । करि + गर्ज्ज + भावे क्तः ।) हस्तिगर्जनम् । तत्पर्य्यायः । वृंहितम् २ । इत्यमरः । २ । ८ । १०७ ॥

करिजः, पुं, (करिणो जायते इति । करि + जन् + कर्त्तरि डः ।) हस्तिशिशुः । इति शब्दमाला ॥

करिणी, स्त्री, (करिन् + स्त्रियां ङीप् ।) हस्तिनी । तत्पर्य्यायः । धेनुका २ वशा ३ । इत्यमरः । २ । ८ । ३६ ॥ करेणूः ४ करेणुः ५ करेणुका ६ रेणुका ७ वासिता ८ वासा ९ हस्तिनी १० । इति शब्दरत्नावली ॥ कटम्भरा ११ पुष्करिणी १२ कचा १३ गणिका १४ गजयोषित् १५ । इति जटाधरः ॥ पद्मिनी १६ इत्यमरटीका ॥ (यथा भागवते । ४ । ९ । ५३ ।

"आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत्पुरम्" ॥)

करिदारकः, पुं, (करिणं दृणाति छिनत्ति दारयतीत्यर्थः । दॄ विदारे + ण्वुल् ।) सिंहः । इति शब्दरत्नावली ॥

करिपत्त्रं, क्ली, (करिणः कर्णवत् पत्त्रं यस्य ।) तालीशपत्त्रम् । इति राजनिर्घण्टः ॥

करिपिप्पली, स्त्री, (करिसंज्ञया संज्ञा यस्याः पिप्पल्याः सा । करिनामिका पिप्पली ।) गजपिप्पली । इत्यमरः । २ । ४ । ९७ ॥

करिपोतः, पुं, (करिणः पोतः शिशुः ।) करिशावकः । इति हलायुधः । २ । ६९ ॥

करिबन्धः, पुं, (करी बध्यते रुध्यतेऽत्र । यद्वा करिणं हस्तिनं बध्नाति अत्र । बन्ध + अधिकरणे घञ् ।) हस्तिबन्धनस्तम्भः । तत्पर्य्यायः । शारब्धिः २ । इति हारावली ॥

करिमाचलः, पुं, ( मच शाठ्यदम्भयो रितिधातोः भावे घञ् । करिणि हस्तिवधविषये माचं शाठ्यं लाति गृह्णातीति । ला + कः ।) सिंहः । इति त्रिकाण्डशेषः ॥

करिमुखः, पुं, (करिणो मुखमिव मुखं यस्य ।) गणेशः । इति त्रिकाण्डशेषः ॥

करिरः, पुं, क्ली, ( कॄ + इरन् । ) करीरः । इति शब्दरत्नावली ॥

करिशावकः, पुं, (करिणः शावकः शिशुः ।) हस्ति-शिशुः । तत्पर्य्यायः । कलभः २ । करभ इत्यपि पाठः । इत्यमरः । २ । ८ । ३५ ॥ करिपोतः ३ । इति हलायुधः ॥ करिणः ४ । इति शब्दमाला ॥ विक्कः ५ । धिक्कः ६ । यथा, शब्दरत्नावली ॥

"यावत् पञ्चाब्दमेतस्मिन् करभः कलभोऽपि च ।
विक्कधिक्कौ तथा स्त्री तु करभी कलभीत्यपि" ॥

करी, [न्] पुं, (करः शुण्डः अस्यास्तीति इनिः ।) हस्ती । इत्यमरः । २ । ८ । ३४ ॥ (यथा भागवते । ८ । २ । २२ ।

"स घर्म्मतप्तः करिभिः करेणुभि-
र्वृतो मदच्युत्कलभैरनुद्रुतः" ॥)

करीरः, पुंक्ली, (किरति विक्षिपति स्वदेहगात्र-गादीनिति । "कॄशॄपॄकटिपटिशौटिभ्य ईरन्" । उणां । ४ । ३० । इति ईरन् ।) वंशाङ्कुरः । इत्यमरः । ३ । ३ । १७३ ॥ बाँशेर कोँड़ा इति भाषा । (यथा, माघे ४ । १४ ।

"रत्नैः पुनर्यत्र रुचा रुचंस्वा-
मानिन्यिरे वंशकरीरनीलैः" ॥

"वंशशब्दस्यान्यानतासेतोरनूपितायाः प्रतिपत्य-र्थत्वादपौनरुक्त्यम् ॥ अतएवैकार्थपदप्रयोग्यस्मि-न्युक्ता करिकलभकर्णावतंसादिषु प्रतिपत्तिविशे-षकरेषु न दोष इत्याह वामनः" ॥ इति तट्टी-कायां मल्लिनाथः ।)

अस्य गुणाः । श्लेष्मनाशित्वम् । कषायत्वम् । दाह-जनकत्वञ्च । इति राजवल्लभः ॥ (यथाह वाभटः ।

"करीरमाध्मानकरं कषायस्वादुतिक्तकम्" ॥

"वेणोः करीराः कफला मधुरा रसपाकतः ।
विदाहिनो वातकराः स कषाया विरूक्षणाः" ॥

इति सुश्रुतः ॥)

करीरः, पुं, (कीर्य्यते क्षिप्यते जलमत्र "कॄशॄपॄक-टीति" ईरन् । उणां । ४ । ३० ।) घटः । इति मेदिनी ॥ (कीर्य्यते दूरे निक्षिप्यते दूरतः त्यज्यते कण्टकादिभयादिति यावत् ।) मरुभूमिज उष्ट्र-प्रियः कण्टकिवृक्षः । करील इति भाषा । तत्-पर्य्यायः । क्रकरः २ ग्रन्थिलः ३ । इत्यमरः । २ । ४ । ७१ ॥ क्रकचः ४ । इति तट्टीका ॥ निष्पत्रिका ५ करिरः ६ गूढपत्रः ७ करकः ८ तीक्ष्णकण्टकः ९ । अस्य गुणाः । (यथा भावप्रकाशे ।

"करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः ।
दुर्नामकफवातामगरशोथव्रणप्रणुत्" ॥)

आध्मानकारित्वम् । कषायत्वम् । कटुत्वम् । उष्ण-त्वम् । अतिशयकफकारित्वम् । श्वासानिलारो-चकसर्व्वशूलविच्छर्दिखर्ज्जूव्रणदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

करीरा, स्त्री, (करिर + "अजाद्यतष्टाप्" । ४ । १ । ४ । इति टाप् ।) चीरिका । झिँझि पोका इति भाषा ॥ हस्तिदन्तमूलम् । इत्युणादिकोषः ॥

करीरिका, स्त्री, (करीरमिवाकृतिरस्यस्याः । करीर + ठन् + टाप च ।) हस्तिदन्तमूलम् । इति त्रि-काण्डशेषः ॥

करीरी, स्त्री, (कृ + ईरन् + गौरादित्वात् ङीष् ।) चीरिका । हस्तिदन्तमूलम् । इति मेदिनी ॥

करीषः, पुं स्त्री, (कीर्य्यते विक्षिप्यते इति । "कॄतॄ-भ्यामीषन्" । उणां । ४ । २६ । इति कॄ + ईषन् ।) शुष्कगोमयम् । इत्यमरः । २ । ९ । ५१ ॥ घुँटे इति भाषा । तत्पर्य्यायः । गोग्रन्थिः २ छगणः ३ । इति हेमचन्द्रः ॥ (यथा, रामायणे । २ । १०० । ७ ।

"ददर्श च वने तस्मिन् महतः सञ्चयान् कृतान् ।
मृगाणां महिषीणाञ्च करीषैः शीतकारणात्" ॥)

करीषाग्निः, पुं, (करीषे करीषस्थितो वा अग्निः ।) शुष्कगोमयवह्निः । घुँटेर आगुन इति भाषा । तत्पर्य्यायः । छागणः २ । इति त्रिकाण्डशेषः ॥

करुणः, पुं, (करोति मनः आनुकूल्याय । कृ + "कॄ वृदारिभ्य उनन्" । उणां । ३ । ५३ । इति उनन् ।) वृक्षविशेषः । करुणा लेवुर गाछ इति भाषा । तत्फलगुणाः । कफवाय्वामभेदोनाशित्वम् । पित्त-प्रकोपकत्वञ्च । इति राजवल्लभः ॥ बुद्धभेदः । इति त्रिकाण्डशेषः ॥ शृङ्गाराद्यष्टरसान्तर्गततृतीय-रसः । इत्यमरः । १ । ७ । १७ ॥ तस्य लक्षणादि ।

"इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥
अनुभावा दैवनिन्दा भूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च ॥
निर्व्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ॥
शोच्यं विनष्टबन्धुप्रभृति । यथा राघवविलासे ।

विपिने क्व जटानिबन्धनं
तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटना विधेः स्फुटं
ननु खड्गेन शिरीषकर्त्तनम् ॥

अत्र रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा । एवं बन्धुवियोगवित्तनाशादावपि उदाहार्य्यम् ॥ परिपोषस्तु महाभारते स्त्रीपर्व्वणि बोद्धव्यः" । इति साहित्यदर्पणे ३ । १९९ ॥ (सर्व्व-जीवेषु दयावान् । यथा भागवते । ३ । २७ । ८ ।

"यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ् मुनिः ।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान्" ॥)

करुणमल्ली, स्त्री, (करुणा करुणाया अर्हा मल्ली ।) नवमल्लिका । इति शब्दचन्द्रिका ॥

करुणविप्रलम्भः, पुं, (करुणयुक्तो विप्रलम्भः ।) पूर्व्व-रागादिचतुर्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भवि-शेषः । अस्य लक्षणम् । यथा साहित्यदर्पणे ३ परिच्छेदे १९३ ।

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः" ॥

यथा, कादम्बर्य्याम् । "पुण्डरीकमहाश्वेतावृत्तान्ते पुनरलभ्ये शरीरान्तरे वा लभ्ये करुणाख्य एव रसः ॥ किञ्चात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः । सङ्गमप्रत्याशायां रतेरुद्भावात् प्रथ-मन्तु करुण एवेत्यभियुक्ता मन्यन्ते यच्चात्र सङ्गम-प्रत्याशाऽनन्तरमपि विप्रलम्भशृङ्गारस्य

प्रवासाख्यो भेद एवेति केचिदाहुः तदन्ये मरणा-रूपविशेषसम्भवात्तद्भिन्नमपि मन्यन्ते" ॥

करुणा, स्त्री, ("कॄवृदारिभ्य उनन्" ॥ उणां । ३ । ५३ । इति कृ + उनन् । टाप् च ।) परदुःखप्रहा-णेच्छा । तत्पर्य्यायः । कारुण्यम् २ घृणा ३ कृपा ४ दया ५ अनुकम्पा ६ । अनुक्रोशः ७ । इत्य-मरः । १ । ७ । १८ ॥ शूकः ८ । इति हेमचन्द्रः ॥ (यथा रघुः ८ । ६७ ।

"करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम्" ॥

गङ्गानामविशेषः । यथा काशीखण्डे २९ । ४३ ।
"कूटस्था करुणा कान्ता कूर्म्मयाना कलावती" ॥

करुणा दयास्वरूपा । इति तट्टीका ॥)

करुणापरः, त्रि, (करुणा परा यस्य करुणायां परः अनुरागी वा ।) दयापरः । तत्पर्य्यायः । दयालुः २ कृपालुः ३ सूरतः ४ । इति हेमचन्द्रः ॥

करुणी, स्त्री, (कृ + उनन् + ङीप् ।) पुष्पवृक्षविशेषः । काकरखिरणि इति कोकणे प्रसिद्धा । तत्पर्य्यायः । ग्रीष्मपुष्पी २ रक्तपुष्पी ३ चारिणी ४ राजप्रिया ५ राजपुष्पी ६ सूक्ष्मा ७ ब्रह्मचारिणी ८ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफ-मारुताध्मानविबन्धच्छर्द्दिजन्तूर्द्ध्वश्वासनाशित्वञ्च । इति राजनिर्घण्टः ॥

करेटः, पुं, (करे कराङ्गुलीषु अटति उत्पद्यते इति अट + अच् अलुक्समासः ।) नखः । इति त्रिका-ण्डशेषः ॥

करेटव्या, स्त्री, (करे अटं अटनं व्ययतीति । व्ये + ड्ः ततष्टाप् ।) धनञ्जूपक्षी । इति त्रिकाण्डशेषः ॥

करेटुः, पुं, (के जले वायौ वा रेटतीति । रेटृ भाषण-याचनयोः + मृगय्वादित्वात् कुः ।) पक्षिविशेषः । करकटिया इति भाषा । तत्पर्य्यायः । कर्करेटुः २ । इत्यमरः । २ । ५ । १९ ॥ करटुः ३ कर्कराटुकः ४ । इति हेमचन्द्रः ॥

करेणुः, पुं, ("कॄहृभ्यामेणुः" । उणां । २ । १ । इति कृ + एणुः । के मस्तके रेणुः पांशुर्यस्य वा । अस्य शुण्डादण्डधूलीनिक्षेपणात् तथात्वम् ।) हस्ती । इत्यमरः । ३ । ३ । ५२ ॥ (यथा माघे १२ । ५ ।

"उत्क्षिप्तगात्रः स्म विडम्बयन्नभः
समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।
आकुञ्चितप्रोहनिरूपितक्रमं
करेणुरारोहयते निषादिनम्" ॥)

कर्णिकारवृक्षः । इति विश्वः ॥

करेणुः, स्त्री, (कृ + एणुः ।) हस्तिनी । इत्यमरः । ३ । ३ । ५२ ॥ (यथा रामायणे २ । ४० । २९ ।
"शुश्रुवे चाग्रतः स्त्रीणां रुदतीनां महास्वनः ।
यथा नादः करेणूनां बद्धे महति कुञ्जरे" ॥

अस्या दुग्धगुणा यथोक्ताः सुश्रुते ।
"हस्तिन्याः [दुग्धं] मधुरं वृष्यं कषायानुरसं गुरु ।
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम्" ॥)

करेणुभूः, पुं, (करेणौ करेणुविषये भवति हस्ति-शास्त्रप्रवर्त्तनाय प्रभवतीत्यर्थः । भू + क्विप् ।) पाल-काप्यमुनिः । इति हेमचन्द्रः ॥

करेणुसुतः, पुं, (करेणुशालङ्कराय उत्पन्नः सुतः।) मुनिविशेषः। इति त्रिकाण्डशेषः॥ (करेणोः सुतः। इति व्युत्पत्त्या करभः॥)

करेणूः, पुं स्त्री, (कृ+एनुः।) हस्ती। हस्तिनी। इत्यमरटीकायां रायमुकुटः॥

करेन्दुकः, पुं, (करेण हस्तिना दीप्त्या इति यावत् इन्दुरिव कायति शोभते। कै+कः।) भूतृणम्। इति राजनिर्घण्टः॥ (भूतृणशब्देऽस्य गुणादयो ज्ञेयाः॥)

करेवरः, पुं, (कीर्य्यते क्षिप्यते पाशाद्यः कपिभिरिति यावत् करः तस्मिन् व्रियते उत्पद्यते।) तुरुष्कः। इति राजनिर्घण्टः। शिलारस इति भाषा॥

करोटं, क्ली, (कं वायुं अन्तर्वायुम्। रोटते प्रतिहन्ति के मस्तके रोटते दीप्यते वा। रुट्+अच्।) शिरोऽस्थि। इति भरतो द्विरूपकोषश्च॥

करोटिः, स्त्री, (केन वायुना अन्तर्वायुना रुध्यते प्रतिहन्यते। के शिरसि रोटते दीप्यते शोभते वा। रुट्+इन्।) शिरोऽस्थि। इत्यमरः। २। ६। ६९॥ माथार खुलि इति भाषा॥

करोटी, स्त्री, (करोट+गौरादित्वात् ङीष्।) शिरोऽस्थि। इति भरतो द्विरूपकोषश्च॥

कर्क, हासे। सौत्रधातुरयम्। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) कर्कति। इति दुर्गादासः॥

कर्कः, पुं, (करोति आदिरं पालयति "कृदाधाराचिंकलिभ्यः कः"। उणां ३।४०। इति कः। बहुलवचनान्न बकारस्येत् संज्ञा।) शुक्लाश्वः। इत्यमरः। २। ८। ४६॥ कुलीरः। दर्पणः। (क्रियतेऽसौ) घटः। कर्कटराशिः। (करोति हिनस्ति) अग्निः। इति हेमचन्द्रः शब्दरत्नावली च॥ कर्कटवृक्षः। इति राजनिर्घण्टः॥

कर्कचिर्भिटी, स्त्री, (कर्कवत् कर्कत्वपा चिर्भिटी वा। कर्कवर्णा वा चिर्भिटी।) चिर्भिटा। कर्कटीभेदः। इति राजनिर्घण्टः॥

कर्कटः, पुं, (कर्क+अटन् प्रत्ययः।) वृक्षविशेषः। तत्पर्य्यायः। कर्कः २ क्षुद्रधात्री ३ क्षुद्रामलकसंज्ञः ४ कर्कफलम् ५॥ *॥ जलजन्तुविशेषः। काँकड़ा इति भाषा। तत्पर्य्यायः। कर्कटकः २ कुलीरः ३ कुलीरकः ४ सदंशकः ५ पङ्कवासः ६ तिर्य्यग्गामी ७। (यथाह आर्य्यासप्तशती। ३२२। "अयमुद्धृतीतवडिशः कर्कट इव मर्कटः पुरतः"॥) अस्य गुणाः। वृष्यविरसूत्रत्वम्। भग्नसन्धानत्वम्। वायुपित्तनाशित्वञ्च। कृष्णकर्कटगुणाः। बलकारित्वम्। ईषदुष्णत्वम्। अनिलापहत्वञ्च। इति राजनिर्घण्टः॥ *॥ पक्षिविशेषः। इति मेदिनी करकटिया इति भाषा॥ पद्मकन्दः। तुम्बी। इति जटाधरः॥ *॥ मेषादिद्वादशराश्यन्तर्गतचतुर्थराशिः। स तु पुनर्व्वसुशेष पादेन सह पुष्याश्लेषाभ्यां भवति। अस्य देवता कुलीराकृतिः। स तु पृष्ठोदयः। श्वेतवर्णः। कफप्रकृतिः। स्निग्धः। जलचरः। विप्रवर्णः। उत्तरदिक्स्वामी। बहुस्त्रीसङ्गः। बहुसन्तानश्च। अत्र जातस्य फलम्। कपटमनल्पं मृदुभाषितं मन्त्रितं अप्रवासितं

अक्लेशित्वञ्च। इति ज्योतिषम्॥ *॥ जन्मकालीनचन्द्राश्रिततद्राशिफलम्। "अतिकलासकलानिम्मलरूपयः सदुपभोगधनो बहुगन्धवान्। किल नरास्तु कुलीरगते विधौ वसुमतः सुमतोऽधिकसम्पदः"॥ इति कोष्ठीप्रदीपः॥ ०॥ तस्योदये तल्लग्नफलं भवति। तस्य गणितप्रमाणपरिमाणं यथा। द्यवकुलाधिकपञ्चाङ्गुलप्रभे कलिकाताख्यदेशे वर्त्तमानोनविंशशयनांश चत्वारिंशदधिकपञ्चदण्डाः। इति ज्योतिषम्। तत्र जातफलम्। "कर्किलग्ने समुत्पन्नो भोगी सर्व्वजनप्रियः। मिष्टान्नपानभोगी च जायते स्वजनप्रियः"॥ इति कोष्ठीप्रदीपः॥ (नागविशेषः। यथा पुराणम्। "अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः। कुलीरः कर्कटः शङ्खश्चाष्टौ नागाः प्रकीर्त्तिताः"॥)

कर्कटकः, पुं, (कर्कट एव स्वार्थे कन्।) कुलीरः। इत्यमरः। १। १०। २१॥ (यथाह सुश्रुतः। "कृष्णाकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः। शुक्लः सन्धानकृत् सृष्ट-विण्मूत्रोऽनिलपित्तहा"॥)

कर्कटशृङ्गिका, स्त्री, (कर्कटतुल्यं शृङ्गं अस्याः कर्कटशृङ्गैव स्वार्थे कन् ततष्टापि इत्वम्।) कर्कटशृङ्गीवृक्षः। इति शब्दरत्नावली॥ ("नीलोत्पलं समङ्गाच्च यष्टी कर्कटशृङ्गिका। गोक्षीरेण द्वितीये च पीता शाम्यति वेदना"॥ इति इन्द्रजाले गर्भस्रावचिकित्सा॥)

कर्कटशृङ्गी, स्त्री, (कर्कटस्य शृङ्गमिव दंशकमिवेत्यर्थः शृङ्गमग्रभागो यस्याः।) वृक्षविशेषः। काँकड़ाशिङ्गी इति भाषा। तत्पर्य्यायः। कर्कटाख्या २ महाघोषा ३ शृङ्गी ४ कुलीरशृङ्गी ५ चक्राङ्गी ६ कुलिङ्गी ७ कासनाशिनी ८। इति रत्नमाला॥ घोषा ९ वनमूर्द्धजा १० चक्रा ११ शिखरी १२ कर्कटाङ्गा १३ कर्कटी १४ विषाणिका १५ कौलीरा १६ चन्द्रास्पदा १७ वक्राङ्गा १८। अस्या गुणाः। तिक्तत्वम्। गुरुत्वम्। उष्णत्वम्। वायुहिक्कातिसारकासश्वासपित्ताघ्नाशित्वञ्च। इति राजनिर्घण्टः॥

कर्कटाख्या, स्त्री (कर्कटस्याख्येव आख्याऽस्याः।) कर्कटशृङ्गीवृक्षः। इति रत्नमाला॥

कर्कटाङ्गः, पुं, (कर्कटं आङ्गयते स्पर्द्धते कण्टकत्वात्। आ+ह्वे+कः। कर्कट इति नाम्ना आह्वयते वा।) बिल्ववृक्षः। इति राजनिर्घण्टः॥

कर्कटाङ्गा, स्त्री, (कर्कटाङ्ग+टाप्।) कर्कटशृङ्गीवृक्षः। इति वैद्यकम्॥

कर्कटिः स्त्री, (करं कटति प्राप्नोति। कटः+"सर्व्वधातुभ्य इन्"। उणां ४।११७। इति इन्। कर्कं परिणामे शुक्लतां अटति गच्छति वा कर्क+अट+इन्। शकन्ध्वादिवत् अलोपे साधुः।) कर्कटी। इति शब्दरत्नावली। काँकुड़ इति भाषा॥

कर्कटिनी, स्त्री, (कर्कटाकारः अस्त्यस्याः। कर्कट+इन् ततो ङीप्।) दारुहरिद्रा। इति राजनिर्घण्टः॥

कर्कटी, स्त्री, (कर्कं कण्टकं अटति गच्छति। कर्क+अट+इन्। शकन्ध्वादित्वात् साधुः ततो ङीष्। कर्कं कटति वा कटि+इन् ततो ङीष्।) शाल्मलिफलम्। इति मेदिनी॥ सर्पः। इति शब्दरत्नावली॥ देवदालीलता। कर्कटउद्भीवृक्षः। उर्व्वारुः। वड़काँकुड़ इति भाषा। घोटिकावृक्षः। फललताविशेषः। काँकुड़ इति भाषा॥ तत्पर्य्यायः। कटुरुची २ छर्द्दापनिका ३ पीनसा ४ मूत्रफला ५ त्रपुषा ६ हस्तिपर्णी ७ लोमशकाण्डा ८ मूत्रला ९ बहुकन्दा १०। इति राजनिर्घण्टः॥ कर्कटाक्षः ११ शान्तनुः १२। इति रत्नमाला॥ चिर्भटी १३ वालुकी १४ उर्व्वारुः १५ अपुषी १६। इति हेमचन्द्रः॥ अस्या गुणाः। मधुरत्वम्। शीतलत्वम्। तिक्तायास्तु रक्तपित्तनाशित्वम्। कफदोषकारित्वम्। पक्वायास्तु मूत्रघ्नोष्णसंग्राहित्वम्। इति राजनिर्घण्टः॥ (तथा च भावप्रकाशे। "कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः। रुच्या पित्तहरा सामा पक्वा तृष्णाग्निपित्तकृत्"। अस्याः पाकप्रकारस्तु। "त्वग्बीजरहिता प्रौढ़ा गुलिकाकारखण्डिता। तप्तिता सुघृते तप्ते कर्कटी वाडवलेहिता॥ विपाचिताहरिद्राद्यैः हिङ्गुयुक्तसार्द्धं विभाजितं वनजनकराभ्यां। तदैवास्त्र बहुगुणमेवत् प्रविश्यस्य रोचनमातनीति॥)

कर्कटुः, पुं, (कर्कं निपातनात् साधुः। कर्कट+मृगव्यादित्वात् कुः वा।) करेटुपक्षी। इति शब्दरत्नावली॥ करकटिया इति भाषा॥

कर्कन्धुः, पुं स्त्री, (कर्कं कण्टकं दधातीति। धा+निपातनात् कुः नुम् च।) कोलिवृक्षः। इत्यमरटीकायां स्वामी॥ (बदरीफलम्। अस्य पर्य्यायगुणा यथा, भावप्रकाशस्य पूर्व्वखण्डे १मभागे॥ "पुंसि स्त्रियाञ्च कर्कन्धुर्बदरी कोलमित्यपि। फेनिलं कुवलं घोण्टा सौवीरं वदरं महत्। अजप्रिया कुहा कोली विषमोभयकण्टका"॥ तत्र वदरविशेषाणां लक्षणानि गुणाश्च। "पक्वमानं सुमधुरं सौवीरं वदरं महत्। सौवीरं वदरं शीतं भेदनं गुरुशीतलम्॥ वृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम्। सौवीरं वदरं लघु सम्यक् मधुरं कोलमुच्यते॥ कोलन्तु वदरं ग्राहि रुच्युष्णञ्च वातलम्। कफपित्तकरञ्चापि गुरु सारकमीरितम्॥ कर्कन्धुः क्षुद्रवदरं कथितं पूर्व्वसूरिभिः। अम्लं स्यात् क्षुद्रवदरं कषायं मधुरं मनाक्॥ स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्। शुष्कं भेद्यग्निकृत्सर्व्वं लघुतृष्णाक्लमास्रजित्"॥ क्वचित् श्रीफलेऽपि दृश्यते यथा, "कर्कन्धुकोलवदरमामं पित्तकफावहम्। पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम्॥ पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु। सौवीरं वदरं स्निग्धं मधुरं वातपित्तजित्"॥ इति सुश्रुते सूत्रस्थाने। ४६ अध्याये॥)

कर्कन्धूः, पुं स्त्री, (कर्कं कण्टकं दधातीति । धा + "अन्दू दृन्फू जम्बू काम्बूकफेलूकर्कन्धूदिधिषु"। उणां—१ । ९५ । इति कूः निपातनात् साधुः ।) बदरीवृक्षः । इत्यमरः । २ । ४ । ३६ ॥ (यथा भागवते । ३ । ३१ । २ ।
"कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम्" ॥
कर्कन्धुशब्देऽस्या विवरणं ज्ञेयम् ॥)

कर्करः, त्रि, (कर्क + अरन् ।) कठिनम् । इति मेदिनी ॥

कर्करा, स्त्री, (कर्कं चूर्णजनकत्वेन हास्यवत् शुक्लताप्रकाशं रातीति । कर्क + रा + कः ।) चूर्णजनकक्षुद्रपाषाणखण्डम् । तत्पर्य्यायः । चूर्णखण्डम् २ । इति हारावली । काँकर घुटिं इत्यादि भाषा ॥ ("छिन्नोवर्करकर्करैः प्रियशतैराक्रम्य विक्रीयते" ॥ इति अमरुशतके ७ ॥)

कर्करः, पुं, (कर्कं हासं प्रतिविम्बप्रकाशं राति । रा + कः । कर्क + अरन् वा ।) दर्पणः । इति मेदिनी ॥ (नागभेदः । इति भारते १ । ३५ । १६ ॥)

कर्कराङ्गः, पुं, (कर्करतुल्यं अङ्गं यस्य ।) कालकण्ठपक्षी । इति शब्दमाला ॥

कर्कराटुः, पुं, (कर्कं हासं रटति प्रकटयतीव । रट + कुः । कुन् वा । णिजन्तात् कुर्वा ।) कटाक्षः । इति जटाधरः ॥

कर्कराटुकः, पुं, (कर्कं कठिनं कर्कशमित्यर्थः रटति रौतीति रट + उकञ् ।) कर्करेटुपक्षी । इति शब्दरत्नावली । करकटिया इति भाषा ॥

कर्करान्धुकः, पुं, (कर्करः कठोरः अन्धुः । अत्यन्तान्धकारतया दुर्दर्शत्वात् । संज्ञायां कन् ।) अन्धकूपः । इति त्रिकाण्डशेषः ॥

कर्करालः, पुं स्त्री, (कर्करः रूक्षतया कठिनोपि अलति पर्य्याप्नोति । अल + अच् ।) चूर्णकुन्तलः । इति हेमचन्द्रः ॥

कर्करी, स्त्री, (कर्कं हासं हास्यप्रकाशवत् निर्म्मलसलिलं रातीति । रा + कः + गौरादित्वात् ङीष् ।) अल्पवारिधानिका । झारी इति भाषा । तत्पर्य्यायः । आलुः २ गलन्तिका ३ । इत्यमरः । २ । ९ । ३१ ॥ अलुः ४ आरुः ५ । इति तट्टीका ॥

कर्करीका, स्त्री, (कर्करी + स्वार्थे कन् ह्रस्वो न ।) कर्करी । इत्युणादिकोषः ॥

कर्करेटं, स्त्री, (कर्कं कर्कं इतिशब्दं गलेहस्तमाधाय दूरीकुरु इत्याकारं रेटते यत्र । रेट् + अधिकरणे घञ् ।) गलेहस्ताधानम् । गलाटिपि इति भाषा । तत्पर्य्यायः । अर्द्धचन्द्रम् २ अङ्गुलितोरणम् ३ । इति हारावली ॥

कर्करेटुः, पुं, (कर्कं कर्केतिशब्दं वा रेटते भाषते रौति इत्यर्थः । रेट् भाषणे याचने च + मृगय्वादित्वात् साधुः ।) करेटुपक्षी । इत्यमरः । २ । ५ । १९ । करकटिया इति भाषा ॥

कर्कशः, पुं, (कर्कशब्दात् मत्वर्थे लोमादित्वात् शः ।) काम्पिल्यवृक्षः । इत्यमरः । २ । ४ । १४६ । गुँड़ारोचनी इति भाषा ॥ (व्यवहारोऽस्य यथा, चरके विमाने ८ अध्याये ॥ "कर्कोटकवार्त्ताकुकर्कशकाकमाचीकारवल्लीत्यादिषु" ॥) कासमर्दः । इक्षुः । (कृणोति हिनस्ति शत्रुं कृञ् हिंसायां + अन्येभ्योऽपीति विच । कशति कश शब्दे इति पचाद्यच् । कृ चासौ कशश्चेति । करे कशति वा ।) खड्गः ॥ इति हेमचन्द्रः ॥

कर्कशः, त्रि, (कर्कात् लोमादित्वात् शः । ततः प्राग्वत् कृञादिधातोर्निष्पादितार्थे च ।) साहसिकः । कठोरः । (यथा भागवते । ३ । १७ । ११ ।
"खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम्" ॥)
अमसृणः । (यथा रघौ । ३ । ४५ ।
"हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्कशाङ्गुलौ" ॥)
दुष्पर्शः । इत्यमरः । ३ । ३ । २१९ ॥ क्रूरः । निर्दयः । इति मेदिनी ॥ (यथा रामायणे । ५ । ४९ । ५ ।
"तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः" ॥)
कृपणः । इति विश्वः ॥

कर्कशच्छदः, पुं, (कर्कशः छदः पत्रं यस्य ।) पटोलः । इति शब्दमाला ॥ शाकोटवृक्षः । शेओड़ा इति भाषा । इति त्रिकाण्डशेषः ॥

कर्कशच्छदा, स्त्री, (कर्कशः अमसृणश्छदो यस्याः ।) कोशातकी । झिङ्गा इति भाषा । दग्धावृक्षः । इति राजनिर्घण्टः ॥ (झिङ्गाकेऽस्या विवरणं ज्ञातव्यम् ॥)

कर्कशदलः, पुं, (कर्कशं दलं पत्रं अस्य ।) पटोलः । इति रत्नमाला ॥

कर्कशदला, स्त्री, (कर्कशं दलं यस्याः ।) दग्धावृक्षः । इति राजनिर्घण्टः ॥ कोशातकी । झिङ्गा इति भाषा ॥

कर्कशवाक्यं, क्ली, (कर्कशं च तत् वाक्यञ्चेति ।) निष्ठुरवचनम् । परुषा वाक् । इति शब्दरत्नावली ॥

कर्कशा, स्त्री, (कर्कशब्दात् लोमादित्वात् शः ततः टाप् च ।) वृश्चिकालीवृक्षः । इति राजनिर्घण्टः ॥

कर्कशिका, स्त्री, (कर्कश + संज्ञायां कन् ततष्टाप् अत इत्वम् ।) वनकोलिः । इति रत्नमाला ॥

कर्कसारं, क्ली, (कर्कः कर्कशः कठिनो वा सक्तुकादिः सारो यत्र ।) करम्भकम् । दधिसक्तुः । इति हारावली ॥

कर्कारुः, पुं, (कर्कं हास्यवत् शौक्ल्यं ऋच्छति प्राप्नोतीति । कर्क + ऋ + वाउलकात् उण् ।) कुष्माण्डः । इत्यमरः । २ । ४ । १५५ ॥ (अस्य पर्य्यायो गुणाश्च यथा,—
"कुष्माण्डी तु भृशं लघ्वी कर्कारुरपि कीर्त्तिता ।
कर्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः ॥
पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे १ मे भागे ॥ एर्व्वारुयोगेनास्य गुणभेदोऽपि दृश्यते । तथाच सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"एर्व्वारुकं सकर्कारु सम्पक्वं कफवातकृत् ।
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम्" ॥)

कर्कारुकः, पुं, (कर्कं हासं भोजने हितकारित्वात् स्वादुत्वाच्च आनन्दं अर्पयतीति । कर्क + ऋ + णिच् + उकञ् । कर्कं हासं हितजनकत्वात् आह्लादकरत्वम् ऋच्छति वा ।) कालिङ्गवृक्षः । इति हारावली ॥ (तत्फलगुणा यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"त्रपुषैर्व्वारुकर्कारुकशीर्णवृन्तप्रभृतीनि ।
गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति च ॥
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च" ॥)

कर्किः, पुं, (कर्क + इन् ।) कर्कटराशिः । इति ज्योतिषम् ॥

कर्केतनं, क्ली पुं, (कर्के हास्यादौ तनोतीति । कर्के + तन् + अच् । सप्तम्या अलुक् ।) रत्नविशेषः । तदुत्पत्त्यादि यथा, गारुड़े ७५ अध्यायः ॥

सूत उवाच ।
"वायुर्नखान् दैत्यपतेर्गृहीत्वा
चिक्षेप सम्यग्घ वनेषु हृष्टः ।
ततः प्रसूतं पवनोपपन्नं
कर्केतनं पूज्यतमं पृथिव्याम् ॥
वर्णेन तद्रुधिरसोममधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति ।
नीलं पुनः खलसितं परुषं विभिन्नं
व्याध्यादिदोषकरणेन न तद्विभाति ॥
स्निग्धा विशुद्धाः समरागिणश्च
आपीतवर्णा गुरवो विचित्राः ।
त्रासव्रणव्याधिविवर्जिताश्च
कर्केतनास्ते परमाः पवित्राः ॥
पत्रेण काञ्चनमयेन तु वेष्टयित्वा
हस्ते गलेऽथ धृतमेतदतिप्रकाशम् ।
रोगप्रणाशनकरं कलिनाशनञ्च
आयुष्करं कुलकरञ्च सुखप्रदञ्च ॥
एवंविधं बहुगुणं मणिमावहन्ति
कर्केतनं शुभमलं क्षतये नरा ये ।
ते पूजिता बहुधना बहुबान्धवाश्च
नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति ॥
एकेऽपनन्त्र विक्षताकुलनीलभासः
प्रम्लानरागलुलिताः कलुषा विरूपाः ।
तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः
कर्केतनस्य सदृशं वपुरुद्वहन्ति ॥
कर्केतनं यदि परीक्षितवर्णरूपं
प्रत्यग्रभास्वरदिवाकरसुप्रकाशम् ।
तस्योत्तमस्य मणिशास्त्रविदा महिम्ना
तुल्यन्तुमूल्यमुदितं तुलितस्य काय्यम्" ॥
हस्ते गलेऽथधृतमेतदतिप्रकाशमित्यत्र तप्तं यदा हुतवहे भवति प्रकाशमिति पुस्तकान्तरे पाठः ॥

कर्कोटः, पुं, (कर्क + ओटप्रत्ययः ।) नागराजविशेषः । इति त्रिकाण्डशेषः ॥

कर्कोटकः पुं, (कर्कं कण्टकमयत्वात् कठोरं अटति प्राप्नोति तद्रूपतया कायति प्रकाशते । पृषोदरादित्वात् ओकारादेशे साधुः ।) विल्ववृक्षः । (कर्कोट + संज्ञायां कन् ।) कद्रुपुत्त्रनागराजविशेषः । इति मेदिनी ॥ (यथा, महाभारते । १ । आस्तीके । ३५ । ५ ।
"ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" ॥)

इक्षुः। इति राजनिर्घण्टः ॥ फललताविशेषः ॥ काँकरोल इति भाषा। तत्पर्य्यायः। किलासघ्नः २ तिक्तपत्रः ३ सुगन्धकः ४। इति हेमचन्द्रः ॥ अस्य गुणाः। शुक्रकफपित्तनाशित्वम्। रुचिकारित्वञ्च। इति राजवल्लभः ॥ ("तद्वत् कर्कोटकं प्रोक्तम्" ॥ इति सुश्रुते। सूत्रे। ४६ अध्याये ॥ विशेषस्त्वस्यैर्व्वारुकशब्दे प्रदर्शितः ॥)

कर्कोटकी, स्त्री, (कर्कोटक + गौरादित्वात् ङीष्।) पीतघोषा वृक्षः। इति रत्नमाला ॥ (अस्याः पर्य्यायमाह चरकः कल्पे ४ अध्याये।

"कर्कोटकी कटुफला महाजालिनिरेव च।
धामार्गवस्य पर्य्याया राजकोशातकी यथा" ॥

विशेषविवरणञ्चास्या धामार्गवशब्दे ज्ञातव्यम् ॥ फललताविशेषः। काँकुड़ इति भाषा ॥ एतद्फलगुणपाकादि उक्तं वैद्यके। यथा,—

"कर्कोटकी फलं कुष्ठहृल्लासारुचिनाशनम्।
श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् ॥
ईषद्विभिन्नमरिचैः परिपूर्णगर्भं
तैलेन रन्धितसुसैन्धवपातयोगम्।
वाह्लीकयुक्तपयसा विहिताभिषेकं
कर्कोटकीफलमिदं रुचिकृत्तरुण्यम्" ॥)

कर्कोटिका, स्त्री, (कर्कोट + स्वार्थे कन् तत टाप् अत इत्वञ्च।) कर्कोटकः। काँकरोल इति भाषा। तत्पर्य्यायः। कुष्माण्डी २ कर्कोटी ३। तत्फलम् कारवेल्लकतुल्यगुणम्। इति राजनिर्घण्टः ॥

कर्च्चरिका, स्त्री, कं सुखं यथा तथा चर्य्यते उपयुज्यते यद्वा कं जलं चुर्य्यते शून्यीक्रियतेऽत्र। क + चर् + वा चुर् + पृषोदरात् रेफादेशे कनादिभिः साधुः।) पिष्टकविशेषः। इति पाकराजेश्वरः। कचुरी इति भाषा ॥

कर्च्चूरं, क्ली, (कर्ज्ज + खर्ज्जूरादित्वात् ऊरः। पृषोदरादित्वात् जकारस्य चकारे साधुः।) कर्व्वुरम्। स्वर्णम्। कचुरमपिपाठः। इत्यमरटीका ॥

कर्च्चूरः, पुं, (कर्ज्ज + ऊरः। पृषोदरादित्वात् साधुः।) वृक्षविशेषः। कचूर इति भाषा। तत्पर्य्यायः। द्राविड़ः २ कर्श्यः ३ दुर्लभः ४ गन्धमूलकः ५ वेधमुख्यः ६ गन्धसारः ७ जटालः ८। अस्य गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। कफकासगलगण्डादिदोषनाशित्वम्। मुखवैशद्यजननत्वञ्च। इति राजनिर्घण्टः ॥ (यथा चरके सूत्रे २७ अध्याये।

"रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्विवर्ज्जितः।
कर्च्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः" ॥)

कर्च्चूरकः, पुं, (कर्च्चूरं स्वर्णमिव कायति प्रकाशते। कर्च्चूर + कै + कः। कर्च्चूर + स्वार्थे कन् वा।) कर्व्वूरकः। इत्यमरटीकायां स्वामी। काँचा हलुद इति भाषा ॥

कर्ज्ज पीड़े। इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट्।) कर्ज्जति। इति दुर्गादासः ॥

कर्ण त् क भिदि। इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-परं-सकं-सेट्।) कर्णयति कर्णापयति। आङ्पूर्व्वोऽयं श्रवणे। देवाकर्णय येन येन सहसा यत्यत् समासादितमिति। उपसर्गास्तत्तदर्थानां द्योतका एव न तु वाचकाः। केवलधातोरनेकार्थत्वेऽवश्यवक्तव्ये उपसर्गपूर्व्वस्याप्यन्यार्थो धातोरेव कल्प्यते लाघवात्। क्वचिदुपसर्गा धात्वर्थमेवानुवर्त्तन्ते। तथा च।

"धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा" ॥

इति विक्तरवृत्तिः ॥ क्रमेणोदाहरणानि। आदत्ते गृह्णातीत्यर्थः। प्रसूयतेऽत्र प्रसव एव धात्वर्थः। प्रशब्दस्तमेवार्थं द्योतयति। प्रणमति प्रकर्षेण नमतीत्यर्थः। केचित्तु अनर्थकोऽन्यः प्रयुज्यते। इति चतुर्थचरणं पठन्ति तच्चिन्त्यम्। इति दुर्गादासः ॥

कर्णः, पुं, (कीर्य्यते क्षिप्यते। शब्दो वायुना यत्र। किरति शब्दग्रहणेन मनसि सुखं क्षिपति ददातीत्यर्थः। कॄ श विक्षेपे + "कॄवृजसीति" नन् निच्च। उणां ३। १०। यद्वा कर्ण्यते आकर्ण्यते अनेन। कर्ण + करणे अप्।) श्रवणेन्द्रियम्। काण इति भाषा। तत्पर्य्यायः। शब्दग्रहः २ श्रोत्रम् ३ श्रुतिः ४ श्रवणम् ५ श्रवः ६। इत्यमरः। २। ६। ९४ ॥ श्रौत्रम् ७। इति तट्टीका ॥ वचोग्रहः ८। इति राजनिर्घण्टः ॥ (यथा रघुः। १। ९।

"तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः" ॥)

कर्णस्तु श्रवणेन्द्रियस्य गोलकं स्थानम्। तत्र श्रोत्रमिन्द्रियम्। तत्तु कर्णशष्कुल्यवच्छिन्ननभोभागः। तस्य देवता दिक्। विषयः शब्दः। इति श्रीभागवतम् ॥ युधिष्ठिराग्रजः। स तु कुन्त्याः कन्याकाले सूर्य्यौरसजातः। एतेन कानीन इत्याख्ययापि प्रसिद्धः। अस्य जन्मादिविवरणन्तु महाभारते १। १११ अध्याये द्रष्टव्यं ॥ तत्पर्य्यायः। राधेयः २ वसुषेणः ३ अर्कनन्दनः ४ घटोत्कचान्तकः ५ चाम्पेशः ६ सूतपुत्त्रकः ७। इति त्रिकाण्डशेषः ॥ चाम्पाधिपः ८ अङ्गराट् ९ राधासुतः १० अर्कतनयः ११। इति हेमचन्द्रः ॥ अङ्गाधिपः १२। इति भूरिप्रयोगः ॥ (यथा महाभारते। १। सम्भवपर्व्वणि १११। ३१।

"प्राङ्नाम तस्य कथितं वसुषेण इति क्षितौ।
कर्णो वैकर्त्तनश्चैव कर्म्मणा तेन सोऽभवत्" ॥

अयं हि दातॄणामग्रगण्यः। अस्य किमपि नादेयमासीत्। अन्यैरभेद्यं सहजमपि स्वदेहकवचं शरीरात् समुत्कृत्य ब्राह्मणरूपधारिणे याचमानाय इन्द्राय दत्तवान् तथा उपोषितं द्विजरूपधारिणं विष्णुं स्वपुत्त्रमांसेन प्रीणयामास। एतद्विवरणन्तु जैमिनिभारते सुव्यक्तमस्त्येव। अयं परशुरामशिष्यो महावीर्य्यः भारतयुद्धे दुर्य्योधनपक्षावलम्बी आसीत्। अष्टादशदिवसव्यापी भारतसंग्रामे भीष्मदेवः सेनापतिपदमधिरुह्य दशाहं यावत् युद्धमकरोत्। ततः शरशय्यां गते तस्मिन् द्रोणश्चतुर्द्दिनानि अयुध्यत। एतस्मिन्नेव समयेऽयं कर्णोऽपि स्वसेनाबलमादाय पाण्डवैः सह युयुधे। ततो गतजीविते द्रोणे सैनापत्यमधिरूढ़ोऽसौ दिवसद्वयं वियुध्य कृष्णसहायेनार्ज्जुनेन निहत आसीत् ॥) सुवर्णालिवृक्षः। इति मेदिनी ॥ (धृतराष्ट्रशतपुत्त्रेषु एकः पुत्त्रः। यथा महाभारते १। ११७। ३।

"दुर्म्मर्षणो दुर्म्मुखश्च दुष्कर्णः कर्ण एव च"।)

नौकायाः क्षेपणीविशेषः। (दाँड़ इति भाषा ॥ यथा रामायणे ६। २३। ३०।

"हतप्रवीरा विध्वस्ता निरुत्साहा निरुद्यमा।
सेना भवति संग्रामे हतकर्णेव नौर्ज्जले" ॥

कर्णः अस्त्यस्य प्राशस्त्येन। अर्श आद्यच्। दीर्घकर्णे त्रि, यथा यजुर्व्वेदे। २। ४। ४०।

"खङ्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्द्दभः" ॥)

कर्णकण्डुः, पुं, (कर्णस्य कर्णे वा जातो कण्डुः।) कर्णरोगविशेषः। तस्य निदानम्। "मारुतः कफसंयुक्तः कर्णकण्डुं करोति च"। इति माधवकरः ॥

("कफेन कण्डुः प्रचितेन कर्णयो-
र्भृशं भवेत् स्रोतसि कर्णसंश्रिते" ॥

इति सुश्रुते उत्तरतन्त्रे २० अध्याये ॥

चिकित्सास्य यथा।

"विधिश्च कफहृत्सर्व्वः कर्णकण्डुमपोहति" ॥

इति तत्रैवोत्तरतन्त्रे २१ अध्याये ॥)

कर्णकीटी, स्त्री, (कर्णस्थितः कर्णस्य भेदकः क्षुद्रः कीटी कीटविशेषः। यद्वा कर्णयति भिनत्ति तादृशी कीटी। कर्ण + अच्। स्वल्पः कीटः कीटी स्वल्पार्थे ङीष् ततः कर्म्मधारयः।) कीटविशेषः। काणकोटारी केणाइ इत्यादि भाषा। तत्पर्य्यायः। कर्णजलौका २ शतपदी ३। इतिहेमचन्द्रः ॥ चित्राङ्गी ४। इति राजनिर्घण्टः ॥ पृथिका ५ कर्णदुन्दुभिः ६। इति शब्दमाला ॥

कर्णक्ष्वेड़ः, पुं, (कर्णस्य कर्णे जातः क्ष्वेड़ो वा।) कर्णरोगविशेषः। (तस्य लक्षणम्।

"वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम्।
करोति कर्णयोः क्ष्वेड़ं कर्णक्ष्वेड़ः स उच्यते" ॥

इति माधवकरः ॥ कर्णरोगशब्देऽस्यापि विस्तृतसनिदानचिकित्सितादिकं ज्ञेयम् ॥)

कर्णगूथं, क्ली, (कर्णस्य कर्णे स्थितं कर्णजातं वा गूथं मलम्।) कर्णमलम्। इति हारावली। काणेर खलि इति भाषा ॥

कर्णगूथकः, पुं, (कर्णगूथ + संज्ञायां कन्। कर्णगूथमिव कायति वा। कै + कः।) कर्णरोगविशेषः। तस्य निदानम्। यथाह माधवकरः।

"पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः" ॥

("विशोषिते श्लेष्मणि पित्ततेजसा
नृणां भवेत् स्रोतसि कर्णगूथकः" ॥

इति सुश्रुते उत्तरतन्त्रे २० अध्याये ॥

चिकित्सास्य वैद्यकचक्रपाणिसंग्रहे ॥ यथा,

"क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च।
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया" ॥)

कर्णजलूका, स्त्री, (कर्णस्य कर्णे वा जलूका इव।) कर्णकीटी। इति शब्दरत्नावली ॥

कर्णजलौका, स्त्री, (कर्णे जलौकेव।) शतपदी। इत्यमरः। २। ५। १३ ॥

कर्णजलौकाः, [स्] स्त्री, (कर्णे जलौका इव।) कर्ण-

जलौका । इत्यमरटीकायां भरतः ॥

कर्णजाहं, क्ली, (कर्णस्य मूलम् । "तस्य पाकमूले" ५ । २ । २४ इत्यादिना जाहच् ।) कर्णमूलम् । इति व्याकरणम् ॥

कर्णजित्, पुं, (कर्णं जितवान् । कर्ण + जि + क्विप् भूते वर्त्तमाने च इति भूते क्विप् तुगागमश्च ।) अर्ज्जुनः । इति हेमचन्द्रः ॥

कर्णदर्पणः, पुं, (कर्णे दर्पण इव ।) ताड़ङ्कनामकर्णभूषणम् । इति त्रिकाण्डशेषः । कानतड़का इति भाषा ॥

कर्णदुन्दुभिः, स्त्री, (कर्णे कर्णाभ्यन्तरे प्रविश्य ध्वनिजनकतया दुन्दुभिरिव ।) कर्णकीटी । इति शब्दमाला ॥

कर्णधारः, पुं, (कर्णं धरति धारयति वा । कर्ण + धृ + "कर्म्मण्यण्" ३ । २ । १ । इति अण् ण्यन्तादच् वा ।) नाविकः । इत्यमरः । १ । १० । १२ ॥ काण्डारि माजि इत्यादि भाषा ॥ (यथा हितोपदेशे । ३ । ४ ।
"यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव" ॥)

कर्णपाली, स्त्री, (कर्णं पालयति स्वीयौज्ज्वल्येन अतीव शोभां सम्पादयतीति । कर्ण + पाल + "कर्म्मण्यण्" । ३ । २ । १ । इति अण् । गौरादित्वात् ङीष् ।) कर्णान्दूः । इति हारावली । कानबाला इति भाषा ॥

कर्णपिशाची, स्त्री, (कर्णं स्वरूपं पिनष्टीति । कर्ण + पिष् + क्विप् । कर्णपिट् अज्ञानं तदाचयति नाशयति स्वरूपदर्शनेन । ततः आ + चि + णिच् अच् ङीष् च ।) देवीविशेषः । तन्मन्त्रादि यदुक्तं तन्त्रान्तरे ।
"कर्णास्येन्दयलोहितो वकगतोऽनन्तश्चिकारो वदातीतानागतशब्दयुक्तभुवनेशी वह्निजायान्विता ।
ताराद्यो मनुरेष लक्षजपतो व्यासेन संसेवितः सार्व्वज्ञं लभतेऽचिरेण नियतं पैशाचिकी भक्तितः" ॥
अस्यार्थः । कर्णः स्वरूपः । आस्ये आदौ इन्दयां इकारः । तद्युक्तो लोहितः पकारः । वकः शकारः । स अनन्तयुक्तः आकारयुक्तः । चि स्वरूपम् । वदातीतानागतं स्वरूपम् । ततो क्रीँ स्वाहा । एतेन ॐ कर्णपिशाचि वदातीतानागतं क्रीँ स्वाहा ॥ * ॥ मन्त्रान्तरम् ।
"कह युग्मं कालिके च ग्रह युग्मं तथैव च ।
पिण्ड पिशाचि स्वाहेति त्र्यर्णः कथितः प्रिये" ॥
कह कह कालिके ग्रह ग्रह पिण्ड पिशाचि स्वाहा ॥ * ॥ ध्यानं यथा ।
"कृष्णां रक्तविलोचनां त्रिनयनां खर्व्वाञ्च लम्बोदरीं बन्धूकारुणजिह्विकां वरवराभीयुक्करामुन्मुखीम् ।
धूम्रार्चिर्जटिलां कपालविलसत्पाणिद्वयां चञ्चलां सर्व्वज्ञां शवहृत्कृताधिवसतीं पैशाचिकीं तां नुमः" ॥
अथ पूजा ।
"निशायामर्द्धरात्रौ च हृदि न्यस्य पिशाचिकीम् ।
दग्धमीनं बलिं दत्त्वा रात्रौ संपूज्य संजपेत्" ॥
ओम् कर्णपिशाचि दग्धमीनबलिं ग्रह ग्रह मम सिद्धिं कुरु कुरु स्वाहेति दग्धमीनं बलिं दद्यात् ।
"रक्तचन्दनबन्धूकजवापुष्पादिकञ्च यत् ।
अम्रतं कुरु देवेशि स्वाहेति प्रोक्षयेज्जलैः" ॥
पूर्व्वाह्णे किञ्चिज्जप्त्वा मध्याह्ने एकभक्तं निरामिषं भुक्त्वा रात्रावपि तत् संख्यं जपेत् । अन्यत् किञ्चिन्न भोक्तव्यं ताम्बूलादिकं विना । जपस्य दशांशं तर्पणम् । ओम् कर्णपिशाचीं तर्पयामि क्रीँ स्वाहा । एवं क्रमेण लक्षमेकं पुरश्चरणं कृत्वा दशांशं होमयेत् । तदभावे दशांशं तर्पणं कृत्वा वरं प्रार्थयेत् । मूलं रक्तचन्दनेन लिखित्वा यन्त्रोपरि इष्टदेवतां पूजयेत् ॥ * ॥
अथ सिद्धिलक्षणमुच्यते । गगने हूँकारादिश्रवणादीर्घाग्निशिखारूपसन्दर्शनात् सिद्धिर्भविष्यतीति ज्ञात्वा तथाविधमाचरेत् ॥ * ॥
मन्त्रान्तरम् । "प्रणवं माया कर्णपिशाचि मे कर्णे कथय हूँ फट् स्वाहा" । इति प्रदीपतैलं पादयोर्दत्त्वा रात्रौ लक्षं जपेत् । ततः सर्व्वज्ञो भवति । नास्याः पूजा ध्यानम् ॥ * ॥ तथा तारं कामवीजं जयादेवी स्वाहा । अस्या अपि ऋष्यादिन्यासादेरभावः । पूर्व्वं लक्षं जप्त्वा गृहगोधिकां निपात्य तदुपरि जयादेवीं यथाशक्ति सम्पूज्य तावत् जपेत् यावत् सा जीवति । ततः सिध्यति । सिद्धिस्तु मानसादिप्रश्ने कृते सा आयाति ततस्तस्याः पृष्ठे सर्व्वं भूतभविष्यदादिकं पश्यति । इति कृष्णानन्दकृततन्त्रसारः ॥

कर्णपुष्पः, पुं, (कर्णवत् कर्णाकृति पुष्पं यस्य । यद्वा कर्णभूषणार्हं पुष्पं यस्य ।) मोरटलता । इति राजनिर्घण्टः ॥

कर्णपूः, [र्] स्त्री, (कर्णस्य सूर्य्यौरसजातस्य कुन्त्याः प्रथमपुत्त्रस्य पूः पुरम् ।) कर्णराजपुरम् । तत्पर्य्यायः । चम्पा २ मालिनी ३ लोमपादपूः ४ । इति हेमचन्द्रः ॥

कर्णपूरः, पुं, (कर्णं पूरयति अलंकरोतीति । कर्ण + पूर् + उपपदेकर्म्मण्यण् इति अण् ।) शिरीषवृक्षः । नीलोत्पलम् । अवतंसः । इति मेदिनी ॥ (यथा, अमरुशतके १ ।
"ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसम्वलितोऽम्बिकायाः ।
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः" ॥)
अशोकवृक्षः । इति राजनिर्घण्टः ॥

कर्णपूरकः, पुं, (कर्णं पूरयति अवतंसयति । कर्ण + पूर + ण्वुल् । यद्वा कर्णपूर स्वार्थे कन् । शिरीषवृक्षः । नीलोत्पलम् । अशोकवृक्षः । एतेषां सर्व्वैरेव कुसुमैः कामिनीनां कर्णाभरणं स्यात् अतोऽस्य तथात्वम् ।) कदम्ववृक्षः । इति राजनिर्घण्टः ॥ (कदम्बशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

कर्णप्रतिनाहः, पुं, (कर्णे जातः प्रतिनाहः रोगविशेषः ।) कर्णरोगविशेषः । तस्य सम्प्राप्तिरूपे ।
"सकर्णगूथो द्रवतां यदा गतो
विलायितो घ्राणमुखं प्रपद्यते ।
तदा स कर्णप्रतिनाहसंज्ञितो
भवेद् विकारः शिरसोऽर्द्धभेदकृत्" ॥
इति माधवकरः ॥ (अस्य चिकित्सा यथा,—
"अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत्" ॥
इति वैद्यकचक्रपाणिसंग्रहे कर्णरोगाधिकारः ॥)

कर्णफलः, पुं, (कर्णः फलमिव यस्य ।) मत्स्यविशेषः । कायलि माच् इति भाषा ॥ अस्य गुणाः । अजीर्णरोगश्लेष्मकारित्वम् । इति राजवल्लभः ॥

कर्णमलं, क्ली, (कर्णस्य मलं गूथम् ।) कर्णजमलम् । तत्पर्य्यायः । कर्णगूथम् २ । इति हारावली ॥

कर्णमुकुरः, पुं, (कर्णे मुकुरः दर्पण इव ।) ताड़ङ्कनामकर्णभूषणम् । इति भूरिप्रयोगः ॥

कर्णमोटी, स्त्री, ( कर्णं कर्णोपलक्षितरोगविशेषं मोटयति नाशयतीति । यद्वा कर्णं शरीरभेदिरोगविशेषं मोटयतीति । कर्ण + मुट् + इन् वा ङीप् ।) चामुण्डादेवी । इति हेमचन्द्रः ॥

कर्णरोगः, पुं, (कर्णस्य कर्णगतः कर्णे जातो वा रोगः ।) श्रवणव्याधिः । यथा । अथ कर्णरोगाधिकारः ।
तत्र कर्णरोगाणां नामानि सङ्ख्याञ्चाह ।
"कर्णशूलं प्रणादश्च बाधिर्य्यं क्ष्वेड एव च ।
कर्णस्रावः कर्णकण्डः कर्णगूथस्तथैव च ॥
प्रतिनाहो जन्तुकर्णो विद्रधिर्द्विविधस्तथा ।
कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्व्विधम् ॥
तथार्व्वुदं सप्तविधं शोफश्चापि चतुर्व्विधः ।
एते कर्णगता रोगा अष्टाविंशतिरीरिताः" ॥ * ॥
तेषु कर्णशूलस्य संप्राप्तिपूर्व्वकं लक्षणमाह ।
"समीरणः श्रोत्रगतोऽन्यथा चरन्
समन्ततः शूलमतीव कर्णयोः ।
करोति दोषैश्च यथास्वमावृतः
स कर्णशूलः कथितो दुराचरः" ॥
अन्यथाचरन् प्रतिलोमं चरन् । दोषैः पित्तकफरक्तैः । रक्तस्यापि व्रणादिकर्त्तृत्वेन दोषसाम्यात् दोषत्वमेव । यथास्वं यथात्मीयनिदानं कुपितैः अथवा यथास्वमिति शूलविशेषणम् । दुराचरः दुरुपचरः मूर्च्छाद्युपद्रवयोगात् ॥ * ॥
कर्णशूलस्यासाध्यतां चाह ।
"मूर्च्छा दाहो ज्वरः कासः क्लमोऽथ वमथुस्तथा
उपद्रवाः कर्णशूले भवन्त्येते मरिष्यतः" ॥ * ॥
कर्णनादस्य लक्षणमाह ॥
"कर्णस्रोतःस्थिते वाते शृणोति विविधान् स्वनान् ।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते" ॥ * ॥
बाधिर्य्यलक्षणमाह ।
"यदा शब्दवहो वायुः स्रोतसावृत्य तिष्ठति ।
शुद्धश्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते" ॥ * ॥
असाध्यबाधिर्य्यमाह ।
"बाधिर्य्यं बालवृद्धोत्थं चिरोत्थञ्च विवर्ज्जयेत्" ॥ * ॥
क्ष्वेडमाह ।
"वायुर्भपित्तादिभिर्युक्तो वेणुघोषसमस्वनम् ।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते" ॥
क्ष्वेडशब्दार्थं व्यनक्ति । वेणुघोषसमस्वनमिति यत उक्तम् । क्ष्वेडनं वेणुघोषवदिति । ननु कर्णनादकर्णक्ष्वेडयोः को भेदः । उच्यते । कर्णनादः केवलेन वातेन जन्यते तत्र नानाशब्दांश्च शृणोति ।

कर्णक्ष्वेडस्तु पित्तादियुक्तेन वातेन जन्यते तत्र नियमेन वेणुघोषमिव शृणोतीति भेदः ॥ * ॥

कर्णस्रावमाह ।

"शिरोऽभिघातादथवा निमज्जतो
जलप्रपाकादथवापि विद्रधेः ।
स्रवेद्धिपूयं श्रवणोऽनिलार्दितः
स कर्णसंस्राव इति प्रकीर्त्तितः" ॥

पूयमित्युपलक्षणं जलं रसञ्च स्रावयेत् ॥ श्रवणशब्दः पुंलिङ्गोऽप्यस्ति ॥ * ॥ कर्णकण्डूमाह ।
"मारुतः कफसंयुक्तः कर्णे कण्डूं करोति हि" ॥*॥

कर्णगूथमाह ।

"पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम्" ॥
कर्णे गूथं यस्मात् स कर्णगूथव्याधिः ॥ * ॥

प्रतिनाहमाह ।

"स कर्णगूथो द्रवतां यदा गतो
विलायितो घ्राणमुखं प्रपद्यते ।
तदा स कर्णप्रतिनाहसंज्ञितो
भवेद्विकारः शिरसोऽर्द्धभेदकृत्" ॥

घ्राणञ्च मुखञ्च एकत्वं द्वन्द्वे । शिरसोऽर्द्धभेदकृत् अर्द्धावभेदकाख्यशिरोरोगकृत् ॥ * ॥

क्रिमिकर्णमाह ।

"यदा तु मूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः ।
तदञ्जनत्वात् श्रवणो निरुध्यते
भिषग्भिराद्यैः क्रिमिकर्णको गदः" ॥

तदञ्जनत्वात् क्रिमिलक्षणत्वात् ॥ श्रवणो क्रिमिकर्णको गदो निरुध्यत इत्यन्वयः ॥ * ॥

पतङ्गादिषु कर्णप्रविष्टेषु लक्षणमाह ।
"पतङ्गाः शतपदाश्च कर्णस्रोतः प्रविश्य हि ।
अरतिं व्याकुलत्वञ्च भृशं कुर्व्वन्ति वेदनाम् ॥
कर्णो निस्तुद्यते तस्य तथा फरफरायते ।
कीटे चरति रुक् तीव्रा निस्पन्दे मन्दवेदना" ॥
निस्पन्दे निश्चले ॥ * ॥ द्विविधकर्णविद्रधिमाह ।

"क्षताभिघातप्रभवस्तु विद्रधि-
र्भवेत्तथा दोषकृतोऽपरः पुनः ।
सरक्तपीतारुणमस्रमास्रवेत्
प्रतोदधूमायनदाहचोषवान्" ॥

क्षतप्रभवोऽभिघातप्रभवश्च तयोरभ्यागन्तुजत्वादैक्यम् ॥ एवं च द्वावभिमतौ ॥ * ॥ कर्णपाकमाह ।
"कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत्" ।
कोथः पूतिभावः । क्लेद आर्द्रता ॥ * ॥

पूतिकर्णमाह ।-

"कर्णविद्रधिपाकाद्वा सकर्णो वारिपूरणात् ।
पूयं स्रवति यत् पूतिं स ज्ञेयः पूतिकर्णकः" ॥ * ॥

कर्णस्रावाद्भेदार्थमाह ।

पूतन्ति नियमेन पूति यथा स्यादेवं स्रवति ॥ * ॥
कर्णगतानां शोथार्बुदार्शसां लक्षणान्याह ।
"कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः" ॥
कर्णशोथाश्च चत्वारो वातपित्तकफरक्तजाः ।
एवमर्शोऽपि चतुर्व्विधम् । अन्येषां शोथानामर्श-साञ्चात्रासम्भव आधारप्रभावात् ॥ अर्व्वुदं सप्त-विधम् । वातपित्तकफरक्तमांसमेदःसिराजम् ॥

एते कर्णरोगा अष्टाविंशतिः सुश्रुतोक्ता उक्ताः ॥ * ॥ इदानीं चरकोक्तकर्णरोगचतुष्टयं वातपित्तकफ-सन्निपातकृतमाह । तत्र वातजमाह ।

"नादोऽतिरुक् कर्णमले तु शोषः
स्रावस्तनुश्चाश्रवणञ्च वातात्" ॥*॥

पित्तजमाह ।

"शोथः सरागो दरणं विदाहः
सपूतिपीतस्रवणञ्च पित्तात्" ॥ * ॥

कफजमाह ।

"वैश्रुत्य कण्डूस्थिरशोथशुक्ल-
स्निग्धस्रुतिस्वल्परुजः कफाच्च" ॥
वैश्रुत्यं अन्यथा श्रवणम् ॥ * ॥

त्रिदोषजमाह ।

"सर्व्वाणि रूपाणि च सन्निपातात्
स्रावश्च तत्राधिकदोषवर्णः" ॥ * ॥
कर्णपाल्याः सकर्णावयवत्वात् तद्विकारमप्यत्रैवाह ।
तत्र सनिदानं परिपोटकलक्षणमाह ॥
"सौकुमार्य्यात् चिरोत्सृष्टे सहसैवातिवर्द्धिते ।
कर्णशोथो भवेत् पाल्यां सरुजः परिपोटवान् ॥
कृष्णारुणनिभः स्तब्धः सवातात् परिपोटकः" ॥*॥

उत्पातमाह ।

"गुर्व्वाभरणसंयोगात् ताड़नात् घर्षणादपि ।
शोथः पाल्यां भवेत् स्रावो दाहपाकरुजान्वितः ॥
रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदः स्मृतः" ॥*॥

उन्मन्थकमाह ।

"कर्णं बलाद्वर्द्धयतः पाल्यां वायुः प्रकुप्यति ।
कफं संगृह्य कुरुते शोथस्तब्धमवेदनम् ॥
उन्मन्थकः सकण्डूको विकारः कफवातजः" ।
अवेदनं ईषद्वेदनम् ॥ * ॥ दुःखवर्द्धनमाह ।
"संवर्द्ध्यमाने दुर्व्विद्धे कण्डूदाहरुजान्वितः ।
शोथो भवति पाकश्च त्रिदोषो दुःखवर्द्धनः" ॥
संवर्द्ध्यमाने दुर्व्विद्धे कर्णे इति शेषः ॥ * ॥

परिलेहिनमाह ।

"कफासृक् क्रिमयः क्षुद्राः सर्षपाभा विसारिणः ।
कुर्व्वन्ति पिड़कां पाल्यां कण्डूदाहसमन्विताम् ॥
कफासृक्क्रिमिसम्भूतः स विसर्पान्वितस्ततः ।
लिह्यात् सशष्कुलीं पालीं परिलेही स च स्मृतः" ॥
स पीड़कात्मकः परिलेहिसंज्ञो गदः । लिह्यात् निर्मांसीकुर्य्यात् ॥ * ॥

अथ कर्णरोगाणां चिकित्सा ।

"कर्णशूले कर्णनादे बाधिर्य्ये क्ष्वेड़ एव च ॥
चतुर्ष्वपि च रोगेषु सामान्यं भेषजं स्मृतम् ।
शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्धार्य्यमेतत् स्याद्वेदनापहम्" ॥ १ ॥
"लशुनार्द्रकशिग्रूणां वारुण्या मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे" ॥
वारुणी वरुणः ॥ २ ॥
"अर्काङ्कुरानम्लपिष्टान् सतैलान् लवणान्वितान् ।
सन्निदध्यात् स्नुहीकाण्डे कोरिते स्नुतयाकृते ॥
पुटपाकक्रमस्विन्नं पीड़येदारसागमात् ।
सुखोष्णं तद्रसं कर्णे प्रक्षिपेच्छूलशान्तये" ॥ ३ ॥



माक्षिकेन निहन्त्याशु शिखिरोगगतमम् ।
आपीड्य तस्याम्बुसुखोष्णमत्र
कर्णे निषिक्तं हरतेऽतिशूलम्" ॥ ४ ॥
"तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ।
छागमूत्रं प्रशंसन्ति कोष्णं सैन्धवसंयुतम् ॥ ५ ॥
तैलं श्योणाकमूलेन मन्देऽग्नौ विधिना कृतम् ।
हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् ॥ ६ ॥
हिङ्गुसैन्धवशुण्ठीभिस्तैलं सर्षपसम्भवम् ।
विपक्वं हरतेऽवश्यं कर्णशूलं प्रपूरणात् ॥ ७ ॥
कर्णशूले कर्णनादे बाधिर्य्ये क्ष्वेड़ एव च ।
पूरणं कटुतैलेन हितं वातघ्नमौषधम् ॥ ८ ॥
शिखरीक्षारजलेन तत्कृतकल्केन साधितं तैलम् ।
अपहरति कर्णनादं बाधिर्य्यञ्चापि पूरणतः" ॥
शिखरी अपामार्गः ॥ ९ ॥
"गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत् ।
सजलञ्च सदुग्धञ्च तद्बाधिर्य्यहरं परम्" ॥
क्षीरमात्रं ग्राह्यम् । बिल्वतैलम् ॥ १० ॥
"कर्णस्रावे पूतिकर्णे तथैव क्रिमिकर्णके ।
सामान्यं कर्म्म कुर्व्वीत योगान् वैशेषिकानपि ॥ ११ ॥
स्वर्जिकाचूर्णसंयुक्तबीजपूररसं क्षिपेत् ।
कर्णस्रावरुजा दाहास्तेन नश्यन्त्यसंशयम् ॥ १२ ॥
आम्रजम्बूप्रवालानां मधुकस्य वटस्य च ।
एभिस्तु साधितं तैलं पूतिकर्णगदं हरेत् ॥ १३ ॥
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ १४ ॥
कृष्णं रसाञ्जनं नार्य्याः क्षीरं क्षौद्रेण संयुतम् ।
प्रशस्यते चिरोत्थे तत् सस्रावे पूतिकर्णके ॥ १५ ॥
कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः ।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम्" ॥
कुष्ठादितैलम् ॥ १६ ॥
"शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति" ॥
शम्बूकाद्यं तैलम् ॥ १७ ॥

"चूर्णेन गन्धकशिलारजनीभवेन
मुष्ट्यंशकेन कटुतैलपलाष्टके तु ।
धत्तूरपत्ररसतुल्यमिदं विपक्वं
नाड़ीं जयेच्चिरभवामपि कर्णजाताम्" ॥

मुष्टिः पलम् । निशा तैलम् ॥ १८ ॥
"क्रिमिकर्णविनाशाय क्रिमिघ्नीं कारयेत् क्रियाम् ।
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ॥ १९ ॥
पूरणं हरितालेन गव्यमूत्रयुतेन च ।
धूपने कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ २० ॥
चिकित्सा कर्णशोथानां तथा कर्णार्शसामपि ।
कर्णार्बुदानां कुर्व्वीत शोथार्शोऽर्बुदवद्भिषक्" ॥ * ॥
अथ कर्णपालीविकाराणां चिकित्सा ।
"पालीसंशोषणे कुर्य्यात् वातकर्णरुजक्रियाम् ।
स्वेदयेत्प्रयतस्ताञ्च स्विन्नां संवर्द्धयेत्तिलैः ॥ १ ॥
शतावरीवाजिगन्धापयस्यैरण्डबीजकैः ।
तैलं विपक्वं सक्षीरं पालीं संवर्द्धयेत् सुखम्" ॥
पयस्यात्र क्षीरकाकोली । शतावरीतैलम् ॥ २ ॥
"जीवनीयस्य कल्केन तैलं दुग्धेन पाचयेत् ।
चिकित्सेत्तेन तैलेन हताशं परिपोटकम् ॥ ३ ॥
शीतलेपैर्जलौकाभिरुत्पातं समुपाचरेत् ॥ ४ ॥

हलिनीसुरसाभ्याञ्च गोधाकङ्कवसान्वितम् ।
तैलं विपक्वमभ्यङ्गादुन्मन्थं नाशयेद्ध्रुवम् ॥ ५ ॥
दुःखवर्द्धनकं सिक्त्वा जम्ब्वाम्रबिल्वपत्रजैः ।
क्वाथैस्तैलेन सुस्निग्धं तच्चूर्णैश्चावधूनयेत् ॥
पङ्कशो गोमयैस्तप्तैः स्वेदितं परिलेपितम् ।
घनसारैः समालिम्पेदजामूत्रेण कल्कितैः" ॥ ६ ॥
इति कर्णरोगाधिकारः । इति भावप्रकाशः ॥*॥
("प्रतिश्यायजलक्रीड़ाकर्णकण्डूयनैर्मरुत् ।
मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनैः ॥
प्राप्य श्रोत्रशिराः कुर्य्याच्छूलं स्रोतसि वेगवत् ।
अर्द्धावभेदकं स्तम्भं शिशिरानभिनन्दनम् ॥
चिराच्च पाकं पक्वन्तु लसिकामल्पशः स्रवेत् ।
श्रोत्रं शून्यमकस्माच्च स्यात् सञ्चारविचारवत् ॥
शूलं पित्तात् सदाहोषा शीतेच्छाश्वयथुं ज्वरम् ।
आशुपाकं प्रपक्वञ्च स पीतलसिकास्रुतिः ॥
सा लसीकास्पृशेद्यद्यत्तत्तत्पाकमुपैति च ।
कफाच्छिरोहनुग्रीवा गौरवं मन्दता रुजः ॥
कण्डूः श्वयथुरुष्णेच्छा पाकात् श्वेतघनास्रुतिः ।
करोति श्रवणे शूलमभिघातादिदूषितम् ॥
रक्तं पित्तसमानार्त्ति किञ्चिद्वाधिकलक्षणम् ।
शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ॥
पर्य्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ।
पक्वं सितासितारक्तघनपूयप्रवाहि च ॥
शब्दवाहिशिरासंस्थे शृणोति पवने मुहुः ।
नादानकस्मादिविधान् कर्णनादं वदन्ति तम् ॥
श्लेष्मणानुगतो वायुर्नादो वा समुपेक्षितः ।
उच्चैः कृच्छ्राच्छ्रुतिं कुर्य्याद्बधिरत्वं क्रमेण च ॥
वातेन शोषितः श्लेष्मा स्रोतो लिम्पेत्ततो भवेत् ।
रुग्गौरवं पिधानञ्च सप्रतीनाहसंज्ञितः ॥
कण्डूशोफौ कफात् श्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ ।
कफो विदग्धः पित्तेन सरुजं नीरुजन्त्वपि ।
घनपूतिबहुक्लेदं कुरुते पूतिकर्णकम् ।
वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजां रुजम् ॥
खादन्तो जन्तवः कुर्य्युस्तीव्रां सकृमिकर्णकः ।
श्रोत्रकण्डूयनाज्जाते क्षते स्यात् पूर्व्वलक्षणः ॥
विद्रधिः पूर्व्ववच्चान्यः शोफोऽर्शोऽर्व्वुदमीरितम् ।
तेषुरुक् पूतिकर्णत्वं बधिरत्वञ्च बाधते ॥
गर्भेऽनिलात्सङ्कुचिता शष्कुली कुचिकर्णकः
एको नीरुगनेको वा गर्भे मांसाङ्कुरः स्थिरः ॥
पिप्पली पिप्पलीमानः सन्निपाताद्विदारिका ।
सवर्णः सरुजस्तब्धः श्वयथुः स उपेक्षितः ॥
कटुतैलाभं पक्वः स्रवेत् कृच्छ्रेण रोहति ।
सङ्कोचयति रूढ़ा च सा ध्रुवं कर्णशष्कुली ॥
शिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम् ।
कृशा दृढ़ा च तन्त्रीवत् पालीवातेन तन्त्रिका ॥
सुकुमारे चिरोत्सर्गात् सहसैव प्रवर्द्धिते ।
कर्णे शोफः सरुक्पाल्यामरुणः परिपोटवान् ॥
परिपोटः सपवनादुत्पातः पित्तशोणितात् ।
गुर्व्वाभरणभाराद्यैः श्यावो रुग्दाहपाकवान् ॥
श्वयथुः स्फोटपिटका रागोषाक्लेदसंयुतः ।
पाल्यां शोफोऽनिलकफात् सर्व्वतो निर्व्यथः स्थिरः ॥
स्तब्धः सवर्णः कण्डूमान् उन्मन्थो गल्लिरश्च सः ।
दुर्व्विद्धे वर्द्धिते कर्णे सकण्डूदाहपाकरुक् ॥
श्वयथुः सन्निपातोत्थः स नाम्ना दुःखवर्द्धनः ।
कफासृक्कृमिजाः सूक्ष्माः सकण्डूक्लेदवेदनाः ॥
लेह्याख्याः पिटिकास्ताहि लिह्युः पालीमुपेक्षिताः ।
पिप्पली सर्व्वजं शूलं विदारी कुचिकर्णकः ॥
एषामसाध्या याप्यैका तन्त्रिकान्यांस्तु साधयेत् ।
पञ्चविंशतिरित्युक्ताः कर्णरोगविभागतः" ॥
इत्युत्तरस्थाने सप्तदशेऽध्याये वाभटेनोक्तम् ॥*॥
अस्य चिकित्सा तेनोक्ताष्टादशेऽध्याये, यथा,
"कर्णशूले पवनजे पिबेद्रात्रौ रसाशितः ।
वातघ्नसाधितं सर्पिः कर्णं स्विन्नञ्च पूरयेत् ॥
पत्राणां पृथगश्वत्थबिल्वार्कैरण्डजन्मनाम् ।
तैलसिन्धूत्थदिग्धानां स्विन्नानां पुटपाकतः ॥
रसैः कवोष्णैस्तद्वच्च मूलकस्यारलोरपि ।
गणे वातहरेऽम्लेषु मूत्रेषु च विपाचितः ॥
महास्नेहो द्रुतं हन्ति सुतीव्रामपि वेदनाम् ।
महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात् ॥
तैलसिक्तात् प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः ।
योज्यस्त्वेवं भद्रकाष्ठात् कुष्ठात् काष्ठाच्च सारलात् ॥
वातव्याधिप्रतिश्याय विहितं हितमत्र च ।
वर्ज्जयेच्छिरसा स्नानं शीताम्भःपानमह्न्यपि ॥
पित्तशूले सितायुक्तं घृतस्निग्धं विरेचयेत् ।
द्राक्षायष्टिशृतं स्तन्यं शस्यते कर्णपूरणम् ॥
यष्ट्यनन्ता हिमोशीरकाकोलीरोध्रजीवकैः ।
मृणालविषमञ्जिष्ठासारिवाभिश्च साधयेत् ॥
यष्टीमधुरसप्रस्थं क्षीरद्विप्रस्थसंयुतम् ।
तैलस्य कुड़वं नस्यपूरणाभ्यञ्जनैरिदम् ॥
निहन्ति शूलदाहोषाः केवलं क्षौद्रमेव वा ।
यष्ट्यादिभिश्च सघृतैः कर्णौ दिह्यात् समन्ततः ॥
वामयेत् पिप्पलीसिद्धसर्पिः स्निग्धं कफोद्भवे ।
धूमनावनगण्डूषस्वेदान् कुर्य्यात् कफापहान् ॥
लशुनार्द्रकशिग्रूणां सुरस्या मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तांल्लवणान्वितान् ।
सन्निधाय स्नुहीकाण्डे कोरिते तच्छदावृतान् ॥
स्वेदयेत् पुटपाकेन स रसः शूलजित्परम् ।
रसेन बीजपूरस्य कपित्थस्य च पूरयेत् ॥
शुक्तेन पूरयित्वा वा फेनेनान्ववचूर्णयेत् ।
अजाऽविमूत्रवंशत्वक् सिद्धं तैलञ्च पूरणम् ॥
सिद्धं वा सार्षपं तैलं हिङ्गुतुम्बुरुनागरैः ।
रक्तजे पित्तवत् कार्य्यं शिराञ्चाशु विमोक्षयेत् ॥
पक्वे पूयवहे कर्णे धूमगण्डूषनावनम् ।
युञ्ज्यान्नाड़ी विधानञ्च दुष्टव्रणहरञ्च यत् ॥
स्रोतः प्रमृज्य दिग्धन्तु द्वौ कालौ पिचुवर्त्तिभिः ।
पूरयेद्धूपयित्वा तु माक्षिकेण प्रपूरयेत् ॥
सुरसादिगणक्वाथफाणिताक्ताश्च योजयेत् ।
पिचुवर्त्तिसुसूक्ष्मैश्च तच्चूर्णैरवचूर्णयेत् ॥
शूलक्लेदगुरुत्वानां विधिरेषनिवर्त्तकः ।
प्रियङ्गुमधुकाम्बष्ठाधातकुत्पलपर्णिभिः ॥
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च ।
पचेत्तैलं तदास्रावं निगृह्णात्याशु पूरणात् ॥
नादबाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम् ।
श्लेष्मानुबन्धे श्लेष्माणं प्रागजयेद्वमनादिभिः ॥
एरण्डशिग्रुवरुणमूलकात् पत्रजे रसे ।
चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणोन्मिते ॥
यष्ट्याह्वाक्षीरकाकोलीकल्कयुक्तं निहन्ति तत् ।
नादबाधिर्य्यशूलानि नावनाभ्यङ्गपूरणैः ॥
पक्वं प्रतिविधाहिङ्गुसिषित्वक् स्वर्ज्जिकौषधैः ।
ससूक्तैः पूरणात्तैलं रुक्स्रावश्रुतिनादनुत् ॥
कर्णनादे हितं तैलं सर्षपोत्थञ्च पूरणे ।
शुष्कमूलकखण्डानां क्षारो हिङ्गुमहौषधम् ॥
शतपुष्पावचाकुष्ठदारुशिग्रुरसाञ्जनम् ।
सौवर्चलयवक्षारस्वर्ज्जिकौद्भिदसैन्धवम् ॥
भूर्ज्जग्रन्थिविड़ं मुस्ता मधुसूक्तं चतुर्गुणम् ।
मातुलुङ्गरसस्तद्वत् कदलीस्वरसश्च तैः ॥
पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात् ।
कण्डूं क्लेदञ्च बाधिर्य्यं पूतिकर्णञ्च रुक्कृमीन् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयेषु च ।
अथ सुप्ताविवस्यातां कर्णौ रक्तं हरेत्ततः ॥
सशोफक्लेदयोर्मन्दश्रुतेर्वमनमाचरेत् ।
बाधिर्य्यं वर्ज्जयेद्बालवृद्धयोश्चिरजञ्च यत् ॥
प्रतिनाहे परिक्लेद्य स्नेहस्वेदैर्विशोधयेत् ।
कर्णशोधनकेनानु कर्णौ तैलस्य पूरयेत् ॥
ससूक्तसैन्धवमधोर्मातुलुङ्गरसस्य वा ।
शोधनाद्रूक्षतोत्पत्तौ घृतमण्डस्य पूरणम् ॥
क्रमोऽयं मलपूर्णेऽपि कर्णे कण्ड्वां कफापहम् ।
नस्यादितद्वच्छोफेऽपि कटूष्णैश्चात्र लेपनम् ॥
कर्णस्रावोदितं कुर्य्यात् पूतिकृमिणकर्णयोः ।
पूरणं कटुतैलेन विशेषात् कृमिकर्णके ॥
वमिपूर्व्वाहिताकर्णविद्रधौ विद्रधिक्रिया ।
पित्तोत्थकर्णशूलोक्तं कर्त्तव्यं क्षतविद्रधौ ॥
अर्शोऽर्व्वुदेषु नासावदामाकर्णविदारिका ।
कर्णविद्रधिवत्साध्या यथा दोषोदयेन च ॥
पालीशोषेऽनिलश्रोत्रशूलवन्नस्य लेपनम् ।
स्वेदञ्च कुर्य्यात् स्विन्नाञ्च पालीमुद्वर्त्तयेत्तिलैः ॥
प्रियालबीजयष्ट्याह्वहयगन्धा यवान्वितैः ।
ततः पुष्टिकरैः स्नेहैरभ्यङ्गं नित्यमाचरेत् ॥
शतावरी वाजिगन्धा पयस्यैरण्डजीवकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम् ॥
कल्केन जीवनीयेन तैलं पयसि पाचितम् ।
आनूपमांसक्वाथे च पालीपोषण वर्द्धनम् ॥
पालीं छित्त्वातिसंक्षीणां शेषां सन्धाय पोषयेत् ।
याप्यैवं तन्त्रिकाख्यापि परिपाटेऽप्ययं विधिः ॥
उत्पाते शीतलैर्लेपो जलौको हृतशोणिते ।
जम्ब्वाम्रपल्लवबलायष्टीरोध्रतिलोत्पलैः ॥
सधान्याम्लैः समञ्जिष्ठैः सकदम्बैः ससारिवैः ।
सिद्धमभ्यञ्जनं तैलं विसर्पोक्तघृतानि च ॥
उन्मन्थेऽभ्यञ्जनं तैलं गोधाकर्क्कवसान्वितम् ।
तालपत्राश्वगन्धार्कवाकुचीतिलसैन्धवैः ॥
सुरसालाङ्गलीभ्याञ्च सिद्धं तीक्ष्णञ्च नावनम्
दुर्व्विद्धेऽश्मन्तजम्ब्वाम्रपत्रक्वाथेन सेचितम् ॥
तैलेन पालीं स्वभ्यक्तां सुश्लक्ष्णैरपि चूर्णयेत् ।
चूर्णैर्मधुकमञ्जिष्ठा प्रपुण्डरीकनिशोद्भवैः ॥
लाक्षाविड़ङ्गसिद्धञ्च तैलमभ्यञ्जने हितम् ।

खिन्नां गोमयजैः पिण्डैर्वेङ्कशः परिलेहिकाम् ॥
विडङ्गसारैरालिम्पेदुरभीमूत्रकल्कितैः ।
कीटजेङ्गुदकारञ्जवीजशम्याकवल्कलैः ॥
अथवाभ्यञ्जने तैर्वा कटुतैलं विपाचयेत् ।
सनिम्बपत्रमरिचमदनैर्लेहिकाव्रणे ॥
छिन्नन्तु कर्णं शुद्धस्य बन्धमालोच्य यौगिकम् ।
शुद्धासं गालयेच्छुद्धे सद्यश्छिन्ने विशोधनम् ॥
अथ ग्रथित्वा केशान्तं कृत्वा छेदनलेखनम् ।
निवेश्य सन्धिं सुषमं न निम्नं न समुन्नतम् ॥
अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठितम् ।
सूत्रेणागाढशिथिलं बद्ध्वा चूर्णैरवाकिरन् ॥
शोणितस्थापनैर्व्रणमाचारञ्चादिशेत्ततः ।
सप्ताहादामतैलाक्तं शनैरपनयेत् पिचुम् ॥
सुरूढं जातरोमाणं श्लिष्टसन्धिसमस्थिरम् ।
सुवर्णाखं सुरागञ्च शनैः कर्णं विवर्द्धयेत् ॥
जलशूकः स्वयं गुप्ता रजन्यौ वृहतीद्वयम् ।
अश्वगन्धा बला हस्तिपिप्पली गौरसर्षपाः ॥
मूलं कोशातकाश्वघ्नस्वल्पिका सप्तपर्णजम् ।
छुच्छुन्दरी कालमृता गृहं मधुकरीकृतम् ॥
जलौका जलजन्मा च तथा शावरकन्दकम् ।
एभिः कल्कैः खरं पक्वं सतैलं माहिषं घृतम् ॥
हस्त्यश्वमूत्रेण परमभ्यङ्गात् कर्णवर्द्धनम् ।
अथ कुर्य्याद्वयस्थस्य छिन्नां शुद्धस्य नासिकाम् ॥
छिन्द्यान्नासासमं पत्रं तत्तुल्यञ्च कपोलतः ।
त्वङ्मांसं नासिकासन्ने रक्ष्यंस्तत्तनुतां नयेत् ॥
सीव्येद्गण्डं ततः सूच्या सेविन्या पिचुयुक्तया ।
नासाच्छेदे च लिखिते परिवर्त्त्योपरित्वचम् ॥
कपोलबन्धं सन्दध्यात् सीव्येन्नासाञ्च यत्नतः ।
नाडीभ्यामुत्क्षिपेदन्तः सुखोच्छ्वासप्रवृत्तये ॥
आमतैलेन सिक्त्वा तु पतङ्गमधुकाञ्जनैः ।
शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ॥
ततो मधुघृताभ्यक्तं बद्ध्वाचारिकमादिशेत् ।
ज्ञात्वावस्थान्तरं कुर्य्यात् सद्यो व्रणविधिन्ततः ॥
छिन्द्याद्रूढेऽधिकं मांसं नासोपान्ते च चर्म्मवत् ।
सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्द्धयेत् पुनः ॥
निवेशिते यथान्यासं सद्यश्छेदेऽप्ययं विधिः ।
नाडीयोगाद्विनौष्ठस्य नासासन्धानवद्विधिः" ॥
इति वाभटे उत्तरस्थाने १८ अध्यायः ॥ * ॥
"सामान्यं कर्णरोगेषु घृतपानं रसायनम् ।
अव्यायामो ऽशिरःस्नानं ब्रह्मचर्य्यमकत्थनम् ॥
कर्णशूले प्रणादे च बाधिर्य्यक्ष्वेडयोरपि ।
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥
स्निग्धं वातहरैः स्वेदैर्नरं स्नेहविरेचितम् ।
नाडीस्वेदैरुपचरेत् पिण्डस्वेदैस्तथैव च ॥
विल्वैरण्डार्कवर्षाभूदधित्थोन्मत्तशिग्रुभिः ।
वत्सगन्धाश्वगन्धाभ्यां तर्कारीयववेणुभिः ॥
आरनालः शृतैरेभिर्नाडीस्वेदः प्रयोजितः ।
कफवातसमुत्थानं कर्णशूलं निरस्यति ॥
मीनकुक्कुटलावानां मांसजैः पयसापि वा ।
पिण्डैः स्वेदञ्च कुर्व्वीत कर्णशूलनिवारणम् ।
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ।
तैलाक्तमङ्गारपूर्णं निदध्याच्छ्रवणोपरि ॥
यत्तैलं च्यवते तस्मात् खल्लादङ्गारसाधितात् ।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥
क्षौमगुग्गुल्वगुरुभिः सघृतैर्धूपयेच्च तम् ।
भक्तोपरि हितं सर्पिर्वस्तिकर्म्म च पूजितम् ॥
निरन्नो निशि तत्सर्पिः पीत्वोपरि पयः पिबेत् ।
मूर्द्धवस्तिषु नस्ये च मस्तिष्के परिषेचने ॥
शतपाकं बलातैलं प्रशस्तञ्चापि भोजने ।
कण्टकारीमजाक्षीरे पक्त्वा क्षीरेण तेन च ॥
विपचेत् कुक्कुटवसां कर्णयोस्तत्प्रपूरणम् ।
तण्डुलीयकमूलानि फलमङ्कोठजन्तथा ॥
अहिंस्राकेन्द्रकामूलं सरलं देवदारु च ।
लसुनं शृङ्गवेरञ्च तथा वंशावलेखनम् ॥
कल्कैरेषां तथाम्लैश्च पचेत् स्नेहं चतुर्विधम् ।
वेदनायाः प्रशान्त्यर्थं हितं तत्कर्णपूरणम् ॥
लसुनार्द्रकशिग्रूनां मुरङ्ग्या मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
शृङ्गवेररसः क्षौद्रं सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥
वंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक् ।
सर्पिः पचेत्तेन कर्णं पूरयेत् कर्णशूलिनः ॥
महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलम् ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥
यत्तैलं च्यवते तेभ्यो घृतेभ्यो भाजनोपरि ।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥
कुर्य्यादेवं भद्रकाष्ठे कुष्ठे काष्ठे च सारले ।
मतिमान्दीपिकातैलं कर्णशूलनिवर्हणम् ॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान् ।
सन्निदध्यात् स्नुहीकाण्डे कोरिते तच्छदावृते ॥
पुटपाकक्रमस्विन्नान् पीडयेदारसागमात् ।
सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये ॥
कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः ।
सुखोष्णैः पूरयेत् कर्णं तच्छूलविनिवृत्तये ॥
कर्णं कोष्णेन चुक्रेण पूरयेत् कर्णशूलिनः ।
समुद्रफेनचूर्णेन युक्त्वा वाप्यवचूर्णयेत् ॥
अष्टानामिह मूत्राणां मूत्रेणान्यतमेन वा ।
कोष्णेन पूरयेत् कर्णं कर्णशूलोपशान्तये ॥
मूत्रेष्वम्लेषु वातघ्ने गणे च क्वथिते भिषक् ।
पचेच्चतुर्व्विधं स्नेहं पूरणं तच्च कर्णयोः ॥
एता एव क्रियाः कुर्य्यात् पित्तघ्नैः पित्तसंयुते ।
काकोल्यादौ दशक्षीरं तिक्ताश्चात्र हितं हविः ॥
क्षीरवृक्षप्रवालेषु मधुके चन्दने तथा ।
कल्कक्वाथे परं पक्वं शर्करामधुकैः सरैः ॥
इङ्गुदीसर्षपस्नेहौ सकफे पूरणे हितौ ।
तिक्तौषधानां यूषाश्च स्वेदाश्च कफनाशनाः ॥
सुरसादौ कृतं तैलं पञ्चमूले महत्यपि ।
मातुलुङ्गरसः शुक्तं लसुनार्द्रकयो रसः ॥
एकैकः पूरणे पथ्यस्तैलं तैरथवा कृतम् ।
तीक्ष्णा मूर्द्धविरेकाश्च कवलाश्चात्र पूजिताः ॥
कर्णशूलविधिः कृत्स्नः पित्तघ्नः शोणितावृते ।
शूलप्रणादबाधिर्य्यक्ष्वेडानान्तु प्रकीर्त्तितम् ॥
सामान्यतो विशेषेण बाधिर्य्ये पूरणं शृणु ।
गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत् ।
सजलञ्च सदुग्धञ्च बाधिर्य्ये कर्णपूरणम् ।
सितामधुकबिम्बीभिः सिद्धं वाजे पयस्यथ ॥
सिद्धं वा बिल्वनिःक्वाथे शीतीभूतं तदुद्धृतम् ।
पुनः पचेद्दशक्षीरं सितामधुकचन्दनैः ॥
बिल्वाम्बुगाढं यत्तैलं बाधिर्य्ये कर्णपूरणम् ।
वक्ष्यते यः प्रतिश्याये विधिः सोऽप्यत्र पूजितः ॥
वातव्याधिषु यश्चोक्तो विधिः स च हितो भवेत् ।
कर्णस्रावे पूतिकर्णे तथैव क्रिमिकर्णके ॥
समानं कर्म्म कुर्व्वीत योगान् वैशेषिकानपि ।
शिरोविरेचनञ्चैव धूपनं पूरणन्तथा ॥
प्रमार्जनं धावनञ्च वीक्ष्य वीक्ष्यावचारयेत् ।
राजवृक्षादितोयेन सुरसादिगणेन वा ॥
कर्णप्रक्षालनं कार्य्यं चूर्णैरेषाञ्च पूरणम् ।
चूर्णं पञ्चकषायोत्थं कपित्थरसयोजितम् ॥
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ।
सर्ज्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ॥
योजितो मधुना वापि कर्णस्रावे प्रशस्यते ।
लाक्षासर्ज्जरसौ वापि चूर्णितौ कर्णपूरणम् ॥
सशैवलमहावृक्षजम्ब्वाम्रप्रसवायुतम् ।
कुलीरक्षौद्रमण्डूकी सिद्धं तैलञ्च पूजितम् ॥
तिन्दुकान्यभयारोध्रं समङ्गामलकं मधु ।
पूरणञ्चात्र पथ्यं स्यात् कपित्थरसयोजितम् ॥
रसमाम्रकपित्थानां मधूकधवशालजम् ।
पूरणार्थं प्रशंसन्ति तैलं वा तैर्विपाचितम् ॥
प्रियङ्गुमधुकाम्बष्ठा धातकी शीतपर्णिभिः ।
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन वा ॥
पचेत्तैलं तदास्रावमवगृह्णाति पूरणात् ।
घृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम् ॥
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ।
निर्गुण्डीस्वरसे तैलं सिन्धुधूमरजोगुडः ।
पूरणः पूतिकर्णस्य शमनो मधुसंयुतः ।
कृमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम् ॥
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ।
क्रिमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥
गुग्गुलुः कर्णदौर्गन्ध्ये धूपनं श्रेष्ठमुच्यते ॥
छर्द्दनं धूमपानञ्च कवडस्य च धारणम् ।
कर्णक्ष्वेडे हितं तैलं सार्षपञ्चैव पूरणम् ॥
विद्रधौ वापि कुर्व्वीत विद्रध्युक्तं चिकित्सितम् ॥
प्रक्लेद्यधीमांस्तैलेन स्वेदेन प्रविलाप्य च ।
शोधयेत् कर्णविट्कान्तु भिषक् सम्यक् शलाकया ॥
नाडीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम् ।
विधिश्च कर्णकृत्सर्व्वः कर्णकण्डूमपोहति ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततोऽतिरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥
कर्णपाकस्य भैषज्यं कुर्य्यात् पित्तविसर्पवत् ।
कर्णच्छिद्रे वर्त्तमानं कीटं क्लेदमलादि वा ॥
शृङ्गेणापहरेद्धीमानथवापि शलाकया ।
शेषाणान्तु विकाराणां प्राक्चिकित्सितमीरितम्" ॥
इति सुश्रुते उत्तरतन्त्रे एकविंशतितमोऽध्यायः ॥ * ॥

चिकित्सितस्थाने ४२ अध्याये सनिदानलक्षण-
चिकित्सितान्युक्तानि हारीतेन यथा,—
"सिक्थेन वा तोयविपूरणेन

मलेन वा चाति भवेद्रुजा च ।
उच्छासरोधाद्भवते तथापि
वातादिकैर्वा कुपितैस्तथापि ॥
संसर्गदोषैरपि सर्व्वदोषैः
क्रिमिप्रवेशादपि तथैव चान्या ।
सञ्जायते कर्णरुजा नरस्य
प्रुणोति तेनापि बहुस्वनांश्च ॥
निःस्वानमेघध्वनिदन्तशब्दान्
शूलं सदाहञ्च शिरोव्यथा च ।
वेणुस्वनं वत्स ! शृणोति सर्व्वं
पित्तेन तं विद्धि भिषग्वरिष्ठ ! ॥
तथा च मूर्च्छां प्रतनोति शब्दं
मेघस्वनं वा कफजे शृणोति ॥
क्रिमिदोषे स्रवेत् पूयं सरक्तं वाति सत्तम ! ।
तथा चैवाभिघातेन जायते तीव्रवेदना ॥
क्षतेन पूयं स्रवते बाल्याद्भवति चापरः ।
तथाभिलुतिदोषेण जायते कर्णजा रुजा ॥
न कर्णरोगे जलपूरणञ्च
न चूर्णमेतत् कथितं विधिज्ञैः ।
तैलं हितं स्वेदनमेव कर्णे
स वाप्यविद्धश्च हितो नरस्य ॥
समुद्रफेनं स्निन्यूर्त्यं सूक्ष्मचूर्णञ्च कारयेत् ।
सौवीरकरसेनापि वातिके कर्णपूरणम् ॥
आर्द्रसौवीरकरसं शुण्ठीसैन्धवगुग्गुलुम् ।
माषकुल्माषतोयेन तैलं पक्वातिचोष्णकम् ।
तुम्बीरसञ्च धार्य्येत कर्णरोगे प्रशस्यते ॥
यष्टीमधुः कुष्ठमरिष्टपत्रं
निशाविशाला सुमनः प्रवालाः ।
विपाटितं कर्णभवे च शूलं
स पैत्तिके वा घृतमेव पक्वम् ॥
ब्राह्मीरसं सैन्धवकं विडङ्गं
सभृङ्गराजञ्च घृतेन युक्तम् ।
तथैव सौवीररसञ्च पथ्या
सुतञ्च वस्त्रं परिपूर्णमेतत् ॥
हितन्त्ववेत्तत् श्रुतिपूरणाय
पूयं सरक्तं क्रिमिनं निहन्ति ॥
सर्व्वे प्रोक्ताः शिरोरोगास्तैलानि च घृतानि च ।
ज्ञात्वाविकान् वा युञ्जीत शिरोरोगविदाम्वरः ।
वातहारीणि पथ्यानि विदाहीनि गुरूणि च" ॥ ४ ॥)

**कर्णलतिका**, स्त्री, (कर्णस्य लतिका लतेव ।) पालिः । इति हेमचन्द्रः ॥ कारणेर पाता इति भाषा ॥

**कर्णवंशः**, पुं, (कर्णः कर्णाकृतिः कर्णवत् सञ्जो वा वंशो यत्र ।) मञ्चः । इति हारावली ॥

**कर्णवर्ज्जितः**, पुं, (कर्णेन श्रवणेन्द्रियेण वर्जितः हीनः । अस्य दर्शनेन्द्रियेणैव श्रोत्रकार्य्यकारित्वात् तथात्वम् ।) सर्पः । इति शब्दचन्द्रिका ॥ कर्णहीने त्रि ॥

**कर्णवेधः**, पुं, (कर्णयोः कर्णस्य वा वेधः वेधनम् ।) कर्णयोश्छिद्रकरणम् । कारणवधान इति भाषा । तस्य विधिर्यथा । मदनरत्ने वशिष्ठश्रीधरौ ॥

"मासे षष्ठे सप्तमे वाष्टमे वा
वेध्यौ कर्णौ द्वादशे षोड़शेऽह्नि ।
मध्येनाह्नः पूर्व्वभागे न रात्रौ
नक्षत्रे द्वे द्वे तिथी वर्ज्जयित्वा" ॥

अत्र जन्ममासो वर्ज्ज्यः । ज्योतिर्निबन्धे गर्गः ।
"मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये" ॥

मदनरत्ने ।
"प्रथमे सप्तमे मासि अष्टमे दशमेऽथवा ।
द्वादशे च तथा कुर्य्यात् कर्णवेधं शुभावहम्" ॥

हेमाद्रौ व्यासः ।
"कार्त्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने" ॥

श्रीधरः ।
"हरिहरकरचित्रासौम्यपौष्णोत्तराश्वि-
दितिवसुषु घटाली सिंहवर्ज्ज्येषु लग्ने ।
शशिगुरुबुधकाव्यानां दिने पर्व्वरिक्ता-
रहिततिथिषु शुद्धे नैधने कर्णवेधः" ॥

मदनरत्ने वृहस्पतिः ।
"द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥
सौवर्णी राजपुत्त्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका" ॥

हेमाद्रौ देवलः ।
"कर्णरन्ध्रं रवेश्छाया न विशेदग्रजन्मनः ।
तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः" ॥ शङ्खः ।
"अङ्गुष्ठमात्रसुषिरौ कर्णौ न भवतो यदि ।
तस्मै श्राद्धं न दातव्यं दत्तञ्चेदासुरं भवेत्" ॥

इति निर्णयसिन्धुः । कर्णषट्कदोषनिवारणार्थं कर्णस्य वेधनम् । सोदरभ्रातॄणां संस्कारणाञ्च पौर्व्वापर्य्यक्रमः कर्णवेधस्यासंस्काररूपत्वात् न तथा नियमः । यथा,—
"यदापत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च ।
कर्णषट्कं विजानीयाद्गर्हितं तत्त्रयस्य च ॥
इत्याशङ्क्य तयोर्मध्ये शुद्धिर्यस्याथ वत्सरे ।
कर्णवेधो हितस्तस्य तस्य ज्येष्ठविचारणा ॥
षटकर्णोत्पत्तिमाशङ्क्य भानोः शुद्धासमेऽपि च ।
कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणं भवेत्" ॥

इति मलमासतत्त्वे माण्डव्यवचनम् ॥ अस्य कालनियमो यथा,—राजमार्त्तण्डे ।
"न जन्ममासे न च चैत्रपौषे
न वर्षयुग्मे न हरौ प्रसुप्ते ।
रवौ च दुष्टे न च कृष्णपक्षे
न जन्मभे कर्णविधिः प्रशस्तः" ॥

तथा दीपिकायाम् ।
"नो जन्मेन्दुभमासमूर्य्यरविजध्यानाद्दसुप्ताच्युते
शस्तेऽर्के लघुविष्णुयुग्ममृदुभस्वात्युत्तरादित्यभैः ।
सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगै
रोजोऽब्दे श्रुतिवेध इज्यसितभे लग्ने तु काले शुभे ॥
अत्रापि तिथ्यक्षादिविहिमत्यं वर्ज्जयेत् ॥

यथाह गर्गः ।
"कर्णवेधव्रते कुर्य्यादुदङ्मार्गस्थिते रवौ ।
दक्षिणामार्गस्थिते भानौ नैव कुर्य्यात् कथञ्चन" ॥
इति ज्योतिषतत्त्वम् ॥

**कर्णवेधनी**, स्त्री, (विध्यतेऽनया । विध+करणे ल्युट् । ततो ङीप् ।) कर्णवेधनास्त्रम् । इति त्रिकाण्डशेषः ॥

**कर्णवेष्टकः**, पुं, (कर्णौ वेष्टयति । वेष्ट+ण्वुल् ।) कुण्डलम् । इति हेमचन्द्रः ॥

**कर्णवेष्टनं**, क्ली, (कर्णौ वेष्ट्येतेऽनेन । वेष्ट+करणे ल्युट् ।) कुण्डलम् । इत्यमरः । २ । ६ । १०३ ॥

**कर्णशष्कुली**, स्त्री, (कर्णयोः कर्णस्य वा शष्कुलीव ।) कर्णगोलकम् । तत्पर्य्यायः । वेष्टनम् २ । इति हेमचन्द्रः ॥

**कर्णशूलः**, पुं, (कर्णस्य शूलः शूलवत् यन्त्रणादायकः ।) कर्णरोगविशेषः । तस्यौषधं यथा,—
"हिङ्गुतुम्बुरुशुण्ठ्या च साध्यं तैलन्तु सार्षपम् ।
एतद्धि पूरणं श्रेष्ठं कर्णशूलापहं परम् ॥ १ ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शुक्तं चतुर्गुणं दद्यात्तैलमेतैर्व्विपाचयेत् ॥
बाधिर्य्यं कर्णशूलञ्च पूयस्रावञ्च कर्णयोः ।
कृमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात् ॥ २ ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शतपुष्पी वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारं सामुद्रं सैन्धवं तथा ।
भुजग्रन्थि विड़ं मुस्तं मधु शुक्तञ्चतुर्गुणम् ॥
मातुलुङ्गरसञ्चैव कदलीरसमेव च ।
तैलमेभिर्व्विपक्तव्यं कर्णशूलापहं परम् ॥
बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः ।
पूरणादस्य तैलस्य कृमयः कर्णयोः खिलाः ॥
क्षिप्रं विनाशमायान्ति शशाङ्कक्षतशेखर ! ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥ ३ ॥
प्रस्थे द्वे गण्डमालानां क्वाथयेत् द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥
काञ्जिकस्याढ़कं दत्त्वा पिष्टान्येतानि दापयेत् ।
पुनर्णवा गोक्षुरकं सैन्धवं त्र्यूषणं वचा ॥
सरलं सुरदारुञ्च वृहती कण्टकारिका ।
नस्यपानाद्धरत्येव कर्णशूलं हनुग्रहम् ॥
बाधिर्य्यं सर्व्वरोगांश्च अभ्यङ्गाच्च महेश्वर !" ॥ ४ ॥
इति गारुड़े १९८ अध्यायः ॥ (कर्णरोगशब्देऽस्य विवरणं ज्ञेयम् ॥)

**कर्णसंस्रावः**, पुं, (कर्णस्य कर्णयोर्वा संस्रावः पूयशोणितादेः निःस्रावणम् यत्र रोगे ।) कर्णरोगविशेषः । तस्य निदानसम्प्राप्तिरूपाणि ।
"शिरोऽभिघातादथवा निमज्जतो
जले प्रपाकादथवापि विद्रधेः ।
स्रवेद्धि पूयं श्रवणोऽनिलार्द्दितः
सकर्णसंस्राव इति प्रकीर्त्तितः" ॥
इति माधवकरः ॥

**कर्णस्फोटा**, स्त्री, (कर्णस्य स्फोटेव स्फोटा विदारणं यस्याः ।) लताविशेषः । काणफाटा इति भाषा । तत्पर्य्यायः । श्रुतिस्फोटा २ त्रिपुटा ३ कृष्णतण्डुला ४ चित्रपर्णी ५ कोपलता ६ चन्द्रिका ७ अर्द्धचन्द्रिका ८ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । हिमत्वम् । सर्व्वविषग्रहभूतादिदोषसर्व्वव्याधिनाशित्वञ्च । इति राजनिर्घण्टः ॥

**कर्णाटः**, पुं, (कर्णेषु अटति प्रभूतयशस्त्विन एतद्देशस्थराज्ञो गुणादिकीर्त्तनेन सर्व्वेषां कर्णेषु

भ्रमतीति। कर्ण + अट + अच्। शकन्ध्वादिवत् साधुः।) स्वनामख्यातदेशविशेषः। इति शब्द-रत्नावली॥ यथा कर्णाटवर्णने राजोक्तिः।
"सर्व्वेश्वो यदि गद्यपद्यनिपुणा स्वेतत्समत्कुर्व्वते तेषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया"॥
अयं देशः कूर्म्मविभागे दक्षिणस्यां दिशि वर्त्तते॥)

कर्णाटी, स्त्री, (कर्णाट + स्त्रियां ङीप्। पारिभाषिकोऽयं शब्दः।) रागिणीविशेषः। इति हलायुधः॥ सा तु मालवरागस्य पत्नी। इति सङ्गीतदामोदरः॥ हंसपदीवृक्षः। इति राजनिर्घण्टः॥

कर्णानुजः, पुं, (कर्णस्यानुजः कर्णमनुजातवानित्यर्थः। अनु + जन् + ड।) युधिष्ठिरराजः। इति त्रिकाण्डशेषः॥

कर्णान्दुः, स्त्री, (कर्णस्य आन्दुरिव।) कर्णपाली। काणतड़का इति भाषा। उत्क्षिप्तिका। इति हेमचन्द्रः। काणकड़ा इति ख्याता॥

कर्णान्दूः, स्त्री, कर्णान्दुः। कर्णपाली। इति हारावली॥

कर्णाभरणकः, पुं, (कर्णस्य आभरणमिव पुष्पैः कायति प्रकाशते। कै + कः।) आरग्वधवृक्षः। इति राजनिर्घण्टः॥

कर्णारा, स्त्री, (अर्य्यते विध्यतेऽनया। कर्ण + ऋ + करणे घञ् टाप् च। धातूनामनेकार्थत्वात् ऋधातोरत्र वेधनार्थः।) कर्णवेधनी। इति त्रिकाण्डशेषः॥

कर्णारिः पुं, (कर्णस्य अरिः शत्रुः।) अर्ज्जुनः। इति पुराणम्॥ नदीसर्जवृक्षः। इति राजनिर्घण्टः। आजन् इति भाषा॥

कर्णास्फालः, पुं, (कर्णयोरास्फालः आस्फालनम्।) झलञ्झला। हस्तिकर्णास्फालनम्। इति त्रिकाण्डशेषः॥

कर्णिका, स्त्री, (कर्ण + इकन् + टाप् च। यद्वा कर्ण + ण्वुल्। ततष्टाप् अत इत्वम्।) कर्णाभरणविशेषः। काणतड़का इति भाषा। तत्पर्य्यायः। तालपत्त्रम् २। इत्यमरः। २। ६। १०३॥ ताड़ङ्कः ३ दन्तपत्त्रम् ४। इति भरतः॥ करिहस्ताङ्गुलिः। करिणः शुण्डाग्रवर्त्त्यङ्गुलाकृतिः। पद्मवीजकोषी। इत्यमरः। ३। ३। १५॥ (यथा भागवते। ३। ८। १६।
"तस्यां सचाम्भोरुहकर्णिकाया-
मवस्थितो लोकमपश्यमानः"॥)
करमध्याङ्गुलिः। क्रमुकादिकूटांशः। इति मेदिनी। वोँटा इति भाषा॥ लेखनी। इति हारावली॥ अग्निमन्थवृक्षः। अजशृङ्गीवृक्षः। इति राजनिर्घण्टः॥ (अप्सरोभेदः। यथा, महाभारते १। १२३। ६१।
"मेनका सहजन्या च कर्णिका पुञ्जिकस्थला"॥
सेवती। गोलावफुल इति भाषा।
"शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा।
महाकुमारी गन्धाढ्या लक्षपुष्पातिमञ्जुला"॥
अस्या गुणा यथा,—
"शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः।
दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च पाचनी"॥
इति भावप्रकाशस्य पूर्व्वखण्डे १ भागे॥
योनिरोगविशेषः। यथा,
"अकाले वाहमानाया गर्भेण पिहितोऽनिलः।
कर्णिकाञ्जनयेद्‌योनौ श्लेष्मरक्तेन मूर्च्छितः"॥
इति चरके चिकित्सास्थाने। ३० अध्याये॥)

कर्णिकाचलः, पुं, (कर्णिकायां स्थितः अचलः।) सुमेरुपर्व्वतः। इति हेमचन्द्रः॥ (अस्य विवरणं यथा भागवते। ५। १६। ७। "यस्य नाभ्यामवस्थितः सर्व्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य"॥)

कर्णिकारः, पुं, (कर्णिं भेदनं करोतीति। कर्णि + कृ + कर्म्मण्यण्। उदरमलभेदकत्वात् अस्य तथात्वम्।) वृक्षविशेषः। कणियार इति भाषा॥ (यथा, महाभारते। १। सम्भवे। १२५। २।
"कर्णिकारैरशोकैश्च केशरैरतिमुक्तकैः"॥)
तत्पर्य्यायः। द्रुमोत्पलः २ परिव्याधः ३। इत्यमरः। २। ४। ६०॥ वृक्षोत्पलः ४। इति रत्नमाला॥ (यथा, महाभारते ३। २४। १७।
"तत्‌शालतालाम्रमधूकनीप-
कदम्बसर्ज्जार्ज्जुनकर्णिकारैः।
तपात्यये पुष्पधरैरुपेतं
महावनं राष्ट्रपतिर्ददर्श"॥
कर्णिकारस्य पुष्पम्। "अवयवे च प्राण्यौषधिवृक्षेभ्यः"। ४। ३। १३५। इति उत्पन्नस्य तद्धितस्य "पुष्पमूलेषु बहुलम्"। इति लुक्। तथा कुमारसम्भवे। ३। २८। "वर्णप्रकर्षे सति कर्णिकारम्"॥ कर्णिकारस्य कुसुममित्यर्थः॥)
आरग्वधविशेषः। छोट सोनालु इति भाषा। तत्पर्य्यायः। राजतरुः २ प्रग्रहः ३ कृतमालकः ४ सुफलः ५ चक्रः ६ परिव्याधः ७ व्याधिरिपुः ८ पिण्डवीजकः ९ लघ्वारग्वधः १०। अस्य गुणाः। सारकत्वम्। तिक्तत्वम्। कटुत्वम्। उष्णत्वम्। कफशूलोदरकृमिमेहव्रणाशित्वम्। व्रणगुल्मनिवारणत्वञ्च। इति राजनिर्घण्टः॥

कर्णिकी, [न्] पुं, (कर्णिका हस्तिशुण्डाग्राङ्गुली अस्त्यस्य इनिः।) हस्ती। इति जटाधरः॥

कर्णी, [न्] पुं, (कर्णौ पक्षौ स्तः अस्य। पुरा किल पर्व्वतानां पक्षाः सन्ति इति पौराणिकी गाथा। "तुन्दादिभ्य इलच्च"। ५। २। ११७। इति चकारादिनिः।) वर्षपर्व्वतसप्तकान्तर्गतपर्व्वतविशेषः। यथा।
"हिमवान् हेमकूटश्च निषधो मेरुरेव च।
चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्व्वताः"॥
इति हारावली॥ वाणविशेषः। यथा।
"करोति कर्णिनो यस्तु यस्तु खड्गादिकृन्नरः।
प्रयान्ति ते विशसने नरके भृशदारुणे"॥
इति विष्णुपुराणे २। ६। १६॥ कर्णिनो वाणविशेषान्। इति तट्टीका॥

कर्णीरथः, पुं, (कर्णसाध्या श्रवणक्रिया उपचारात् कर्णः। कर्णोऽस्यास्ति इनिः। कर्णी चासौ रथश्चेति शब्दमात्रेण रथो न वस्तुतः। यद्वा साभिप्रायात् कर्णशब्देन स्कन्धो लक्ष्यते। सोऽस्त्यस्य वाहकत्वेन इनिः। कर्णी चासौ रथश्च। अन्येषामपीति दीर्घः।) क्रीड़ार्थनिर्म्मितस्वल्परथः। पुरुषस्कन्धनीयमानरथः। इति भरतः॥ स्त्रीवहनार्थमुपरि वस्त्राच्छादितरथविशेषः। इति मञ्जरी॥ चतुर्दोल इति ख्यात इति पिटकषणाः॥ इति सारसुन्दरी॥ स्त्रीरत्नवहनार्थमुपरिवस्त्राच्छादितमनुष्यवाह्ययानविशेषः। इति भरतः॥ तत्पर्य्यायः। प्रवहणम् २ डयनम् ३। इत्यमरः। २। ८। ५२॥ प्रवहणम् ४ डयनम् ५। इति तट्टीका॥

कर्णीसुतः, पुं, (कर्ण्याः सुतः।) मूलदेवः। इति त्रिकाण्डशेषः॥ (यथा हारावली ३२।
"कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः"॥
तथा च कादम्बरीटीकायाम्।
"कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्त्तकः॥)

कर्णेजपः, त्रि, (कर्णे जपति यः। जपादित्वात् स्तम्बकर्णयोरित्यच् हलदन्तादित्यलुक्।) अप्रकाश्येनानुचितप्रबोधकः। कर्णे लगित्वा परापकारं वदति यो जनः। ठक् इति ख्यातः। तत्पर्य्यायः। सूचकः २ पिशुनः ३ दुर्जनः ४ खलः ५। इत्यमरः। ३। १। ४७॥ कर्णेजपादिद्वयं परापकारवादिनि। पिशुनादित्रयं परस्परभेदनशीले॥ कर्णेजपादिपञ्चकं सूचके इति केचित्॥ त्रयमिति केचित्। इति भरतः॥

कर्णेन्दुः पुं, (कर्णयोः कर्णे वा इन्दुरिव।) कर्णान्दुः। अर्द्धचन्द्राकृतिकर्णभूषणम्। इति शब्दरत्नावली॥

कर्त्त, त् क शैथिल्ये। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) रेफस्याधस्तकारः कर्त्तयति कर्त्तापयति धूलिर्ज्जलेन। इति दुर्गादासः॥

कर्त्तः, पुं, (कर्त्त + भावे + अप्।) भेदः। यथा।
"लब्ध्वा निरन्ध्र यतयो यमकर्त्तहेतिं
जह्नुः स्वराडिव निपानखनित्रमिन्द्रः"॥
इति श्रीभागवते २। ७। ४८॥ "कर्त्तो भेदः तन्निरासो अकर्त्तः तत्र हेतिं साधनं जह्नुः"। इति तट्टीकायां श्रीधरस्वामी॥ (कर्त्तयति शिथिलीकरोति भिनत्ति वा। कर्त्त + अच्। भेदके, त्रि॥)

कर्त्तनं, क्ली, (कृत् + भावे + ल्युट्।) छेदनम्। नारीणां सूत्रनिर्म्मितिः। इति मेदिनी। काट्ना काटा। इति भाषा॥

कर्त्तरी, स्त्री, (कृन्ततीति। कृति छेदने + बाहुलकादरप्रत्ययः ततो ङीप्। यद्वा कृत् + घञ्। कर्त्तं रातीति। "आतोनुपेति"। ३। २। ३। कः। गौरादित्वात् ङीष्।) कृपाणी। इत्यमरः। २। १०। ३४॥ पत्रोत्कृतस्वर्णादिः कर्त्तनास्त्रम्। काति इति ख्यातः॥ केशकर्त्तनिका। इति भरतः। काँचि इति भाषा। काटारी इति ख्याता च॥ (योगविशेषः। यथा, ज्योतिषशास्त्रे।
"क्रूरमध्यगतश्चन्द्रो लग्नं वा क्रूरमध्यगम्।
कर्त्तरी नाम योगोऽयं कन्या निधनकारकः"॥)

कर्त्तव्यं, क्ली, (कृ + तव्य।) करणीयम्। करणयोग्यम्। कार्य्यम्। इति व्याकरणम्॥

कर्त्तव्यः, त्रि, (कर्त्तुं योग्यं कर्त्तुं उचितं वा। कृ

अवश्यं करणीयं यत् तत् कर्त्तव्यमिति स्मृतम् । ह्व+योग्यार्थे तव्यः ।) करणयोग्यः । यथा, हितोपदेशे ॥

"हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः । अजा सिंहप्रसादेन वने चरति निर्भयम्" ॥

कर्त्ता, [ कृ ] त्रि, (करोति क्रियां निष्पादयतीति वा । करोति यः कर्म्मेति शेषः । कृ+कर्त्तरि तृच् । ) कारकः । इति मेदिनी ॥ षट्कारकान्तर्गतकारकविशेषः । वोपदेवेनास्य घसंज्ञा कृता । अत्र उक्तार्थे प्रथमा अनुक्तार्थे तृतीया विभक्तिर्भवति ॥ तस्य लक्षणम् । "क्रियानुकूलकृतिमत्त्वम्" । इति सारमञ्जरी ॥ "यः करोति सः" । इति सर्व्ववर्म्मा ॥ "कृत्याश्रयः" । इति तार्किकाः ॥ "चेतनान्तरव्यापाराव्यवधानेन धात्वर्थनिष्पादकश्चेतनः कर्म्मकरणादिकारकचक्रप्रयोक्ता वा" । इति प्रायश्चित्तविवेकः ॥ "क्रियासुख्यप्रयोजकौ कर्त्ता" । इति क्रमदीश्वरः ॥ स तु पञ्चविधः । क्रियासुखः १ हेतुकर्त्ता २ प्रयोजकः ३ अनुमन्ता ४ ग्रहीता ५ । तथा च ।

"क्रियासुखो भवेत् कर्त्ता हेतुकर्त्ता प्रयोजकः । अनुमन्ता ग्रहीता च कर्त्ता पञ्चविधः स्मृतः" ।

इति गोयीचन्द्रटीकाद्धृतोयालचक्रवर्त्ती ॥ स च त्रिविधः । सात्त्विकः १ राजसः २ तामसः ३ ।

सात्त्विको यथा,—

"मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते" ॥

राजसो यथा,—

"रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः" ॥

तामसो यथा,—

"अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते" ॥

इति श्रीभगवद्गीता । १८ । २६-२८ ॥

कर्त्ता, [ कृ ] पुं, (करोति सृजति चतुर्द्दशभुवनानि यः सर्व्वलोककर्त्तेति यावत् । कृ+तृच् ।) परमेष्ठी । ब्रह्मा । इति मेदिनी ॥ क्रियानुकूलकृतिमान् । स च त्रिविधः । यथा,—

"त्रिधैव जायते कर्त्ता विशेषेण प्रतिक्रियाम् । योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः" ॥

अस्यार्थः । क्रियां प्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम् । स्वाध्यायोऽध्येतव्य इत्यत्र योग्यत्वेन त्रयवर्णिकत्वैवर्णिकः ॥ १ ॥ अहरहर्द्द्यात् दीक्षितो न ददातीत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरपरः ॥ २ ॥ स्वर्गकामो यजेतेत्यत्र विशेषणपदान्वयेन स्वर्गकामः कर्त्ता ज्ञायते ॥ ३ ॥ * ॥

नित्ये निषेधे च यद्यत् साधनं तदभावस्तदभावसाधनं इत्यनुभवसिद्धा नित्याकरणं निषिद्धाचरणञ्च प्रत्यवायसाधनं शास्त्रावगतं अतस्तदभावो नित्याचरणं निषिद्धाकरणञ्च प्रत्यवायाभावसाधनमिति प्रत्यवायपरिहारार्थी नियोज्योऽन्वेति तद्बोधकविशेषणपदाध्याहारादिति बोध्यं ततश्चेयं विधिवाक्यशाब्दधीः । यथा, काम्ये स्वर्गकामो यजेतेत्यत्र स्वर्गकामस्य कर्त्तव्ययागविषयकं कार्य्यम् । नित्ये अहरहः सन्ध्यामुपासीत इत्यत्र प्रत्यवायपरिहारार्थिनः कर्त्तुः प्रत्यहं सन्ध्यावन्दनविषयकं कार्य्यम् । न कलञ्जं भक्षयेदित्यत्रापि प्रत्यवायपरिहारार्थिनः कर्त्तुः कलञ्जभक्षणाभावविषयकं कार्य्यमित्येवं रूपा । इति धर्म्मदीपिका ॥ (महादेवः । यथा, महाभारते । १३ । १७ । ६४ ।

"संग्रहो निग्रहः कर्त्ता सर्पचीरनिवासनः" ॥

विश्वसृष्टिप्रकरणेऽपि कर्तृत्वात् आदिकर्त्ता विष्णुः ॥ यथा महाभारते १३ । १४९ । ४७ ।

"क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्म्महीधरः" ॥)

कर्त्तृका, स्त्री, ( कृन्तति छिनत्तीति । कृत्+तृच् । स्वार्थे कन् टाप् च ।) छुरिकाखड्गः । यथा,—

"हास्ययुक्तां त्रिनेत्राञ्च कपालकर्त्तृकाकराम्" ॥

इति तन्त्रसारे श्यामाध्यानम् ॥

कर्त्तृत्वं, क्ली, (कर्तुर्भावः । कर्तृ+भावे त्वम् ।) कर्त्तृधर्म्मः । यथा, श्रीभगवद्गीता । ५ । १३ ॥

"न कर्त्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः" ॥

कर्त्त्र, त् क शैथिल्ये । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-अकं-सेट् ।) रेफद्वययुक्तान्तकारः । कर्त्त्रयति कर्त्त्रापयति धूलिर्जलेन । इति दुर्गादासः ॥

कर्त्त्री, स्त्री, (करोति या कर्म्माणीतिशेषः । कृ+तृच्+ङीप् च ।) कर्त्तरी । इति शब्दरत्नावली ॥ कारिका । इति मुग्धबोधव्याकरणम् ॥

कर्द्द, कुत्सितरवे । इति कविकल्पद्रुमः । (भ्वां-परं-अकं-सेट् ।) उदरशब्दे । इति रमानाथः ॥ एकोऽर्थः । कर्द्दति काकः । रमानाथस्तु कौक्षेकर्द्दतीति भट्टमल्लदर्शनादुदरसम्बन्धिशब्द एव अस्य प्रयोग इति मन्वानः कर्द्दति शिशुरिति यदुदाजहार तद्धेयम् । यत्तन्मते कर्द्दत्युदरमित्येव स्यात् । इति दुर्गादासः ॥

कर्द्दः, पुं, (कर्द्द+अच् ।) कर्द्दमः । इति शब्दरत्नावली ॥ कादा इति भाषा ॥

कर्द्दटः, पुं, ( कर्द्दं कर्द्दमं अटति कारणत्वेन प्राप्नोतीति । कर्द्द+अट्+अच् । शकन्ध्वादित्वात् अलोपे साधुः ।) करहाटः । पङ्कः । पङ्कारः । इति मेदिनी ॥

कर्द्दनं, क्ली, (कर्द्दते इति । कर्द्द+भावे ल्युट् ।) उदरशब्दः । इति हेमचन्द्रः । पेटेर डाक इति भाषा ॥

कर्द्दमं, क्ली, (कर्द्द+"कलिकर्द्दिभ्योऽमः" । उणां । ४ । ८४ इति अमः ।) मांसम् । इति शब्दचन्द्रिका ॥

कर्द्दमः, पुं, (कर्द्द कुत्सितरवे+ "कलिकर्द्दिभ्योऽमः" । उणां ४ । ८४ इति अमः ।) कर्द्दः । कादा इति भाषा । तत्पर्य्यायः । निषद्वरः २ जम्बालः ३ पङ्कः ४ शादः ५ । इत्यमरः । १ । १० । ९ ॥ ( तथाहि याज्ञवल्क्यः । १ । १९७ ।

"रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः । मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च" ॥)

अस्य गुणाः । शीतलत्वम् । स्रुत्त्वम् । विषशोथवेदनादाहशोथनाशित्वम् । व्रणशोधनरोपणत्वञ्च । इति राजवल्लभः ॥

( "कर्द्दमो दाहपित्तार्त्तिशोथघ्नः शीतलः सरः" । इति भावप्रकाशस्य पूर्व्वखण्डे १ भागे ॥) स्वायम्भुवमन्वन्तरे प्रजापतिविशेषः । स तु ब्रह्मणश्छायायां जातः । तस्य भार्य्या स्वायम्भुवमनुकन्या देवहूतिः । पुत्त्रः कपिलदेवः कन्याः कलाद्या नव । इति श्रीभागवतम् । ३ । १२ । २७ ॥ पापम् । इत्युणादिकोषः । ४ । ८४ ॥ छाया । यथा,—

"वेदेषु कर्द्दमः शब्दश्छायायां वर्त्तते स्फुटम् । बभूव कर्द्दमात्तस्मात् कर्द्दमस्तेन कीर्त्तितः" ॥

इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २२ अध्यायः ॥ (नागविशेषः । यथा महाभारते १ । ३५ । १६ ।

"कर्द्दमश्च महानागो नागश्च बहुमूलकः" ॥)

कर्द्दमाटकः, पुं, (कर्द्दमो मलादिः अट्यते निक्षिप्यते यत्र । कर्द्दम+अट्+अधिकरणे घञ् । ततः कप् । यद्वा कर्द्दमस्य मलादेः आटो निक्षेपोऽत्र । कर्द्दमे इव आटोगतिरत्रेति केचित् । ततः कप् ।) विष्ठादिनिक्षेपस्थानम् । इति शब्दरत्नावली ॥

कर्द्दमी, स्त्री, सुदुरुक्षः । इति वैद्यकम् ॥

कर्पटः, पुं, ( कीर्य्यते क्षिप्यते इति । कॄ+कर्म्मणि विच् । कर् चासौ पटश्चेति कर्म्मधारयः । यद्वा करस्थः पटः । शकन्ध्वादित्वात् अलोपे साधुः ।) मलिनत्वादिदुष्टजीर्णवस्त्रखण्डम् । नेकड़ा इति ख्याता । ( यथा कथासरित्सागरे ४ । ६१ ।

"चीरखण्डैककर्पटः" ॥) तत्पर्य्यायः । नक्तकः २ । इत्यमरः । ३ । ५ । ३३ ॥ नक्तकः ३ । इति भरतः ॥ पर्व्वतविशेषः । यथा, कालिकापुराणे ८१ अध्यायः ॥

"नीलशैलस्य पूर्व्वस्मिन् स्वरूपं प्रतिपादितम् । नाभिमण्डलपूर्व्वस्यां भस्मकूटस्य दक्षिणे ॥ पूर्व्वस्यां कर्पटो नाम पर्व्वतो यमरूपधृक् । तत्र याम्यशिला कृष्णा नीलाञ्जनसमप्रभा ॥ अधित्यकायां राजेन्द्र व्यामपञ्चसु विस्तृता । पूजयेत्तत्र शमनं याम्यां दण्डं सदैव यः ॥ धत्ते तु प्राणिनां नित्यं प्राणदण्डस्य साधनम् । कृष्णवर्णन्तु द्विभुजं किरीटमुकुटोज्ज्वलम् ॥ दधतञ्चासिपुत्त्रीञ्च वामपाणौ सदैव हि । कृष्णवस्त्रं स्थूलपदं वह्निर्निःसृतदन्तकम् ॥ वराभयकरं नित्यं त्वयां महिषवाहनम् । पूजयेत् परया भक्त्या याम्यवीजेन साधकः ॥ उपान्त्यवर्गस्यादिर्यो वर्णो विन्दिन्दुसंयुतः । यमवीजमिति ख्यातं यमस्य प्रीतिकारकम् ॥ अनेनैव तु मन्त्रेण शमनं यस्तु पूजयेत् । कर्पटाख्येऽचलवरे नाप्नस्त्वं समाप्नुयात्" ॥

कर्पटधारी, [ न् ] त्रि, (कर्पटं धरति धारयति वा । कर्पट+धृ+णिनिः ।) मलिनजीर्णवस्त्रखण्डधारी । भिक्षुकः । इति शब्दरत्नावली ॥

कर्पटिकः, त्रि, (कर्पटोऽस्त्यस्य । कर्पट+अस्त्यर्थे ठन् ।) कर्पटधारी । इति शब्दरत्नावली ॥

कर्पटी, [ न् ] त्रि, (कर्पटोऽस्त्यस्य । कर्पट+इनिः ।) भिक्षुकः । कर्पटधारी । इति शब्दरत्नावली ॥

कर्परः, पुं, (कृप्+बाहुलकात् अरन् । लालाभावश्च ।) कपालः । इत्यमरः । २ । ६ । ६८ ॥ मालाइ खुलि इति भाषा । शस्त्रभेदः । कटाहः । इति मेदिनी ॥ उडुम्बरः । इति शब्दचन्द्रिका ॥

कर्परांशः, पुं, ( कर्परस्य अंशः । ) शर्करा । इति शब्दरत्नावली । खोलाकुचि इति भाषा ॥

कर्परालः, पुं, (कर्पर इवालति पर्य्याप्नोति । कर्पर + अल् + अच् । कर्परं अलति इति केचित् । अल् + कर्म्मण्यण् ।) कन्दरालः । पर्व्वतजातपीलुवृक्षः । इत्यमरटीकायां रमानाथः । आखरोट् इति भाषा ॥

कर्परिकातुत्थं, क्ली, (कर्पर्य्येव इति स्वार्थे कन् तत ष्टाप् अत इत्वं कर्परिकेव तुत्थम् ।) तुत्थविशेषः । कर्परी । इति हेमचन्द्रः ॥

कर्परी, स्त्री, (कृप् + वाञ्जलकादरट् । लत्वाभावश्च । टित्त्वात् ङीप् । केचित्तु कृपधातोररन् प्रत्ययेन निष्पादितोऽयं तन्मते गौरादित्वात् ङीष् ।) क्वाथोद्भवं तुत्थम् । दारुहरिद्रार क्वाथेर तुतिया इति भाषा । तत्पर्य्यायः । दार्व्विका २ । इत्यमरः । २ । ९ । १०१ ॥ तुत्थाञ्जनम् । इति तट्टीकायां स्वामी ॥

कर्पासः, पुं क्ली, ("कृञः पासः" । उणां ५ । ४५ इति कृधातोः पासः ।) कार्पासः । इत्यमरटीका । कापास् इति भाषा ॥

कर्पासी, स्त्री, (कर्पास इति जातित्वात् गौरादित्वात् वा ङीष् । ) कार्पासी । इति भरतः ॥ कापासगाछ इति भाषा ॥

कर्पूरः, पुं, क्ली, (कृप् + "खर्जूरादित्वात्" उणां ४ । ९० । इति ऊरः ।) स्वनामख्यातसुगन्धिद्रव्यम् । काफुर इति पारस्य भाषा । कपूर् इति हिन्दी भाषा । (यथा,—राजेन्द्रकर्णपूरे ३३ ।
"कर्पूरैरिव पारदैरिव सुधास्यन्दैरिवाप्लाविते जाते हन्त ! दिवापि देव ! ककुभां गर्भे भवत्कीर्त्तिभिः" ॥) तत्पर्य्यायः । घनसारः २ चन्द्रसंज्ञः ३ सिताभ्रः ४ हिमवालुका ५ । इत्यमरः २ । ६ । १३० ॥ सिताभः ६ । इति तट्टीका ॥ घनसारकः ७ सितकरः ८ शीतः ९ शशाङ्कः १० शिला ११ शीतांशुः १२ हिमवालुकः १३ हिमकरः १४ शीतप्रभः १५ शाम्भवः १६ शुभ्रांशुः १७ स्फटिकाभ्रः १८ कारमिहिका १९ ताराभ्रः २० चन्द्रार्द्दकः २१ चन्द्रः २२ लोकतुषारः २३ गौरः २४ कुमुदः २५ हनुः २६ हिमाह्वयः २७ चन्द्रभस्म २८ वेधकः २९ रेणुसारकः ३० । इति शब्दरत्नावली ॥ अस्य गुणाः । शिशिरत्वम् । तिक्तत्वम् । कटुत्वम् । श्लेष्मरक्तपित्ततृष्णाविदाहकण्ठास्यदोषोष्णारोगनाशित्वञ्च ॥
"कर्पूरो नूतनस्तिक्तः स्निग्धस्त्वोष्णास्वदाहदः ।
चिरस्थो दाहशोषघ्नः स धौतः शुभकृत्परः" ॥
इति राजनिर्घण्टः ॥
अपि च । पाके शीतलत्वम् । चक्षुर्हितकारित्वम् । पक्वकर्पूरादपक्वस्याधिकगुणत्वञ्च । इति राजवल्लभः ॥ तद्भेदा यथा । पोतासः १ भीमसेनः २ सितकरः ३ शङ्करावाससंज्ञः ४ पांशुः ५ पिञ्जः ६ अब्दसारः ७ हिमवालुकः ८ जूतिका ९ तुषारः १० हिमः ११ शीतलः १२ पत्रिकाख्यः १३ । इति राजनिर्घण्टः ॥
(तत्रादौ कर्पूरस्य नाम गुणाश्च ।
"कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः ।
सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः ।
दाहतृष्णास्यवैरस्यमेदो दौर्गन्ध्यनाशनः ॥
कर्पूरोद्विविधः प्रोक्तः पक्वापक्वप्रभेदतः ।
पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम्" ॥
अथ चीनाककर्पूरः । चीनेकर्पूर इति भाषा ।
"चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः ।
कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे १ म भागे ॥
"सतिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः ।
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः" ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

कर्पूरकः, पुं, (कर्पूर इव कायति प्रकाशते शोभते वा । कर्पूर + कै + क ।) कर्ब्बुरकः । कर्चूरकः । इति शब्दचन्द्रिका ॥

कर्पूरतिलकः, पुं, (कर्पूर इव शुक्लं तिलकं ललाटचिह्नं यस्य । स्वनामख्यातो हस्ती । यथा हितोपदेशे १ । ३४६ ।
"अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती" ॥)
स्त्री, उमासखिभेदः । जया । इति शब्दमाला ॥

कर्पूरतैलं, क्ली, (कर्पूराज्जातं तैलं स्नेहः । कर्पूरस्य तैलमिव स्नेहो वा ।) कर्पूरस्नेहः । तत्पर्य्यायः । हिमतैलम् २ सुधांशुतैलम् ३ शीतांशुतैलम् ४ तुहिनांशुतैलम् ५ सितांशुतैलम् ६ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवातामयनाशित्वम् । दन्तदार्ढ्यपित्तकारित्वञ्च । इति राजनिर्घण्टः ॥

कर्पूरनालिका, स्त्री, पक्वान्नविशेषः । कर्पूरनारि इति नेओयाला इति च ख्याता । यथा भावप्रकाशः ।
"घृताढ्यया समितया कृत्वा लम्बपुटं ततः ।
लवङ्गोषणकर्पूरयुतया सितयान्वितम् ॥
पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका ।
संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका" ॥

कर्पूरमणिः, पुं, (कर्पूरवर्णो मणिः ।) पाषाणभेदः ।
"कर्पूरमणिनामायं युक्त्या वातादिदोषनुत्" ॥
इति राजनिर्घण्टः ॥

कर्फरः, पुं, (कीर्य्यते क्षिप्यते इति । कॄ + विच् । कर् । फल्यते इति फलः प्रतिविम्बः । फल + कः । लस्य रः । कीर्य्यमाणः फलः प्रतिविम्बः यत्र । दर्पणे हि मुखादीनां प्रतिविम्बपतनात् तथा बोध्यते ।) दर्पणः । इति जटाधरः ॥

कर्ब्ब गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) रेफोपधः । कर्ब्बति । इति दुर्गादासः ॥

कर्ब्बुदारः, पुं, (कर्ब्बुरिव कर्ब्बुः सन् वा श्लेष्माणं मलं वा दारयतीति । कर्ब्बु + दॄ + णिच् + अच् ।) कोविदारवृक्षः । इति शब्दमाला ॥ श्वेतकाञ्चनः । अस्य गुणौ । ग्राहित्वम् । रक्तपित्तरोगे विशेषेण पथ्यत्वञ्च । इति राजवल्लभः ॥ ("शणस्य कोविदारस्य कर्ब्बुदारस्य शाल्मलेः ।
पुष्पं ग्राहि प्रशस्तस्य रक्तपित्ते विशेषतः" ॥
इति चरके सूत्रस्थाने । २७ अध्याये ॥)
नीलझिण्टी । इति शब्दचन्द्रिका ॥

कर्ब्बुदारकः, पुं, (कर्ब्बुदारवत् कायति । कै + कः । यद्वा कर्ब्बुः सन् कर्ब्बुरिव वा श्लेष्माणं पापं दारयति । दॄ + णिच् + ण्वुल् ।) श्लेष्मान्तकवृक्षः । इति राजनिर्घण्टः ॥

कर्ब्बुरं, क्ली, (कर्ब्बति गर्ब्बत्यस्मात् यस्मिन् सति वा गर्ब्बी भवति कर्ब्बत्यनेन वा । कर्ब्ब दर्पे इति "मद्गुरादयश्च" उणां १ । ४२ । इति उरच् ।) स्वर्णम् । धुस्तूरवृक्षः । इत्यमरः । २ । ९ । ९४ ॥ जलम् । इति मेदिनी ॥

कर्ब्बुरः, पुं, (कर्ब्बति हिनस्ति जीवम् । कर्ब्ब हिंसायां + "मद्गुरादयश्च" । उणां । १ । ४२ । इति उरच् ।) राक्षसः । ("कर्ब्बुरः श्वेतरक्षसोः" उणाम् । १ । ४२ । कर्ब्बति नानावर्णतां गच्छति । कर्ब्ब गतौ + उरच् । उणां १ । ४२ ।) नानावर्णः । तत्पर्य्यायः । चित्रम् २ किर्म्मीरः ३ कल्माषः ४ शवलः ५ एतः ६ ॥ (यथा कुमारे । ४ । २७ ।
"इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त ! किं स्थितम् ।
तदिदं कणशो विकीर्य्यते
पवनैर्भस्म कपोतकर्ब्बुरम्" ॥)
तद्वति त्रि । इत्यमरः । १ । ६ । १७ ॥ शटी । इत्यमरटीका ॥ पापम् । इति मेदिनी ॥ नदीनिष्पावधान्यम् । इति राजनिर्घण्टः ॥

कर्ब्बुरफलः, पुं, (कर्ब्बुरं चित्रवर्णं फलं यस्य ।) साकुरुण्डवृक्षः । इति राजनिर्घण्टः ॥

कर्ब्बुरा, स्त्री, (कर्ब्बुर + टाप् ।) कृष्णवृन्ताावृक्षः । इति मेदिनी ॥ पारुल इति भाषा ॥ वर्व्वरः । इति जटाधरः ॥ वावुइ तुलसी इति भाषा ॥ (जलौकोजातिविशेषः ।
"वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्ब्बुरा" ॥
इति सुश्रुते । १३ अध्याये ॥)

कर्ब्बुरी, स्त्री, (कर्ब्बुर + गौरादित्वात् ङीष् ।) दुर्गा । इति त्रिकाण्डशेषः ॥

कर्ब्बूरं, क्ली, (कर्ब्बति गर्ब्बं प्राप्नोति यस्मात् कर्ब्ब दर्पे गतौ वा खर्ज्जूरादित्वात् ऊरः । उणां ४ । ९० । पृषोदरात् दीर्घो वा ।) स्वर्णम् । इति मेदिनी ॥ हरितालम् । इति त्रिकाण्डशेषः ॥

कर्ब्बूरः, पुं, (कर्ब्बति गर्ब्बति हिनस्ति वा । कर्ब्ब + ऊरः ।) शटी । इत्यमरः । २ । ९ । ९४ ॥ राक्षसः । इत्युणादिकोषः ॥ द्राविड़कः । इति शब्दरत्नावली । काँचहल्दि इति भाषा ॥

कर्ब्बूरकः, पुं, (कर्ब्बूर + स्वार्थे कन् ।) हरिद्राभवृक्षः । काँचहल्दि इति ख्यातः । इति भरतः ॥ कालहरिद्रा । इति सारसुन्दरी ॥ कर्पूरहरिद्रा । इति सारमञ्जरी ॥ पाकवसन्तः । इति भगीरथः ॥ काङ्क्विला हरिद्रेति ख्याता । इति टीकासर्व्वस्वम् ॥ हरिद्राभकचोरा इति ख्याता । इति मधुमाधवी ॥ तत्पर्य्यायः । द्राविड़कः २ काल्पकः ३ वेधमुख्यकः ४ । इत्यमरः । २ । ४ । १३५ ॥ काल्यकः ५ इति टीका सर्व्वस्वम् ॥

कर्म्म, [न्] क्ली, (यत्क्रियते तत् । कृ + मनिन् । कर्त्तुः क्रियया यद्व्याप्यते तद्वा क्रियाव्याप्यं कर्म्मेति

केचित्। तत्तु मतभेदन त्रिधा चतुर्द्धेति विभक्त-मुच्यते ।) षट्कारकान्तर्गतकारकविशेषः। वोप-देवेनास्य ढ इति संज्ञा कृता। अत्र द्वितीया विभक्तिर्भवति। तस्मिन् उक्ते प्रथमा। तस्य लक्ष-णम्। "परसमवेतधात्वर्थजन्यफलशालित्वं कर्म्म-त्वम्"। इति सारमञ्जरी॥ "यत्क्रियते तत्"। इति प्रसिद्धम्। करोतेर्निखिलक्रियावाचकत्वात् कर्त्तु-र्व्यापारैर्यत् साध्यते तदित्यर्थः। अतएव "क्रिया-व्याप्यं कर्म्म"। इति क्रमदीश्वरः। तच्चतुर्व्विधम् निर्व्वर्त्यम् १ यथा घटं करोति पुत्त्रं प्रसूते॥ विकार्य्यम् २ तच्च द्विविधम्। प्रकृतेरुच्छेदकं प्रकृतेर्गुणान्तराधायकञ्च। आद्यं यथा काष्ठं भस्म करोति। अन्त्यं यथा सुवर्णं कुण्डलं करोति।

यथा चोक्तं भर्त्तृहरिणा।

"यदसज्जायते पूर्व्वं जन्मना यत् प्रकाशते।
तन्निर्व्वर्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्॥
प्रकृत्युच्छेदसम्भूतं विकार्य्यं काष्ठभस्मवत्।
अन्यद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्"॥

प्राप्यम् ३ यथा ग्रामं गच्छति चन्द्रं पश्यतीत्यादि॥ अनीप्सितञ्च ४ यथा पापं त्यजति इत्यादि। इति कारके २ मुग्धबोधसूत्रस्य टीकायां दुर्गा-दासः॥ *॥

सप्तपदार्थान्तर्गततृतीयपदार्थः। तत्तु पञ्चविधम्। यथा,—भाषापरिच्छेदे ६, ७।

"उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा।
प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च॥
भ्रमणं रेचनं स्पन्दनोर्द्धज्वलनमेव च।
तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते"॥

कुसुमाञ्जलिमते यागहिंसादि॥ तत्तु त्रिवि-धम्। सात्त्विकम् १ राजसम् २ तामसम् ३।

सात्त्विकं यथा,

"नियतं सङ्गरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म्म यत्तत् सात्त्विकमुच्यते"॥

राजसं यथा,—

"यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः।
क्रियते बहुलायासं तद्राजसमुदाहृतम्"॥

तामसं यथा,—

"अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म्म यत्तत्तामसमुच्यते"॥

इति श्रीभगवद्गीता। १८। २३-२५॥

जन्मात् दशमलग्नम्। इति ज्योतिषम्॥ क्रिया। इत्यमरः॥ तच्च पञ्चविधम्। नित्यनैमित्तिककाम्य-प्रायश्चित्तनिषिद्धभेदात्। तत्र आद्यानि चत्वारि धर्म्माणि। अन्त्यं अधर्म्मम्। तच्च जन्मभेदात् चतुर्व्विधम् सञ्चितं प्रारब्धं क्रियमाणं भावि च। इति वेदान्तमतम्॥ ७॥

ब्राह्मणादीनां स्वाभाविककर्म्माणि यथा।

"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम्॥
शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्त्रकर्म्म स्वभावजम्॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावजम्।
परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभावजम्"॥ ७॥

स्वकर्म्माभिरतस्य फलं यथा।

"स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥
यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्।
स्वभावनियतं कर्म्म कुर्व्वन्नाप्नोति किल्विषम्॥
सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्।
सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥
असक्तबुद्धिः सर्व्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति"॥

इति श्रीभगवद्गीतायाम्। १८। ४२-४९॥

कर्म्मकरः, त्रि, (कर्म्म करोति मूल्येन। डु कृञ् करणे + "कर्म्मणि भृतौ"। ३। २। २२। इति टः।) मूल्यं गृहीत्वा कर्म्म-कारकः। मजुर ठिकाचाकर इत्यादि भाषा। तत्पर्य्यायः। भृतकः २ भृतिभुक् ३ वैतनिकः ४॥ वेतनोपजीवी। तत्पर्य्यायः॥ भरण्यभुक् २। इत्य-मरः। ३। १। १९॥ कर्म्मण्यभुक् ३। इति तट्टीका॥ कर्म्मकर्त्तृमात्रञ्च॥ (यथा, मिताक्षरायां नारदः। "शिष्यान्तेवासिभृतकास्तुर्य्यस्त्वधिककर्म्मकृत्। एते कर्म्मकरा ज्ञेयाः"॥)

कर्म्मकरः, पुं, (कृञ् हिंसायां + मन्। कर्म्म हिंसां करोतीति। कृ + हेत्वादौ टः। यद्वा, जीवकृत-कर्म्माधिकृत्य करोति सुखदुःखयोर्व्यवस्थां निष्पा-दयति नरकस्वर्गादिव्यवस्थां करोति वा। धर्म्मा-धर्म्मात्मकं कर्म्म समीक्ष्य सर्व्वान् शास्तीत्यर्थः। कर्म्मफलानुसारेण पापात्मनां दण्डप्रदानरूपहिं-सायामधिकारित्वात् अस्य तथात्वम्।) यमः। इति मेदिनी॥

कर्म्मकरी, स्त्री, (कर्म्म + कृ + टः। टित्त्वात् + ङीप्।) मूर्व्वा लता। बिम्बिका लता। इति मेदिनी॥ दासी। इति शब्दरत्नावली॥ (यथा भागवते ३। २३। २७।

"वयं कर्म्मकरीस्तुभ्यं शाधि नः करवाम किम्"॥)

कर्म्मकारः, पुं, (कर्म्म वेतनं गृहीत्वा लोहादिभिः खड्गकर्त्तरिकादिकं करोति निर्म्मातीति। कर्म्म + कृ + उपपदे "कर्म्मण्यण्"। ३। २। १। इति अण्।) वर्णसङ्करविशेषः। लौहकारः। कामार इति भाषा। स तु शूद्रायां विश्वकर्म्मणो जातः। इति ब्रह्मवैवर्त्तपुराणम्॥ वृषः। इति शब्दचन्द्रिका॥

कर्म्मकारः, त्रि, (कर्म्म करोति भृतिमृते। कर्म्म + कृ + अण्।) वेतनं विना भारवहनादिकर्म्मकारकः। वेगार इति भाषा॥ तत्पर्य्यायः। कर्म्मक्रियः २। इत्यमरः। ३। १। १९॥

कर्म्मकीलकः, पुं, (कर्म्मणा कीलक इव वस्त्रक्षालन-रञ्जनादिना गृहस्थानां मानरक्षाकपाटकीलक-स्वरूपः।) रजकः। इति त्रिकाण्डशेषः॥

कर्म्मजः, पुं, (कर्म्मणो जातः। विषयभोगवासनाव शात् क्रमशः मलिनायमानो वृत्तिभिर्जात इत्यर्थः। जन + ड।) कलियुगः। इति शब्दरत्नावली॥ वटवृक्षः। इति जटाधरः॥ क्रियाजन्ये त्रि। (यथा, मनुः। १२। १०१।

"तथा दहति वेदज्ञः कर्म्मजं दोषमात्मनः"॥

कारणभेदेन रोगभेदो यथा।

"बहुभिरुपचारैस्तु येन यान्ति समन्ततः।
ते कर्म्मजाः समुद्दिष्टा व्याधयो दारुणाः पुनः"।

इति हारीते चिकित्सितस्थाने २ अध्यायः॥)

कर्म्मजगुणः, पुं, (कर्म्मणो जायते यो गुणः क्रियाहेतोः जातो गुण इत्यर्थः।) क्रियाजन्यगुणः। तद्यथा।

"संयोगश्च विभागश्च वेगश्चैते तु कर्म्मजाः"।

इति भाषापरिच्छेदे॥ ९७॥

कर्म्मठः, त्रि, (कर्म्मणि घटते इति। "कर्म्मणि घटो-ऽठच्"। ५। २। ३५। इति अठच्।) कर्म्मकुशलः। यथा। भट्टिः। १। ११।

"ज्ञाताशयस्तस्य ततो व्यतानीत्
स कर्म्मठः कर्म्मसुतानुबन्धम्"॥

प्रयत्नेन प्रारब्धं कर्म्म समापयति यः। तत्पर्य्यायः। कर्म्मशूरः २। इत्यमरः। ३। १। १८॥

कर्म्मण्यः, त्रि, (कर्म्मणि साधुः तत्र साधुरिति यत्। यद्वा कर्म्मणा सम्पादि।) कर्म्मयोग्यः। क्रियार्हः। केजुया इति भाषा। कर्म्मणा भ्राजते इत्यर्थे य-प्रत्ययः। इति संक्षिप्तसारव्याकरणम्॥ (यथा, ऋग्वेदे १। ९१। २०। "सोमोवीरं कर्म्मण्यं ददाति"॥)

कर्म्मण्यभुक्, त्रि, (कर्म्मण्यं वेतनं भुङ्क्ते। भुज् + क्विप्।) भरण्यभुक्। वेतनोपजीवी। इत्यमरटीकायां स्वामी॥

कर्म्मण्या, स्त्री, (कर्म्मणा सम्पद्यते तत्र साधुरिति यत्। टाप् च।) वेतनम्। मूल्यम्। इत्यमरः। २। १०। ३८॥

कर्म्मन्दी, [न्] पुं, (कर्म्मन्देन भिक्षुसूत्रकारकेण स्वनामख्यातऋषिविशेषेण प्रोक्तं भिक्षुसूत्रमधीते यः। कर्म्मन्द + इनिः।) भिक्षुः। सन्न्यासी। इत्य-मरः। २। ७। ४२॥

कर्म्मफलं, स्त्री, (कर्म्मणः जीवकृतशुभाशुभस्य शास्त्र-विहितस्य निषिद्धस्य वा सुखदुःखादिरूपं फलं परिणाम इत्यर्थः।) कर्म्मविपाकः। (यथा, विष्णुपुराणे १। १९। ७१।

"समस्तकर्म्मभोक्ता च कर्म्मोपकरणानि च।
त्वमेव विष्णो! सर्व्वाणि सर्व्वकर्म्मफलञ्च यत्"॥

तथा च मनुः। ११। २३१।

"एवं सञ्चिन्त्य मनसा प्रेत्य कर्म्मफलोदयम्"॥)

कर्म्मरङ्गफलम्। इति मेदिनी॥ कामराङ्गा इति भाषा॥

कर्म्मभूः, स्त्री, (कर्म्मणः कृषिकार्य्यस्य कर्म्मणि वा उचिता उपयोगिनी वा या भूः।) कृष्टभूमिः। तत्पर्य्यायः। कर्म्मान्तः २। इति हेमचन्द्रः॥ (आर्य्या-वर्त्तदेशः। यथा, विष्णुपुराणम्।

"तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने!।
यतो हि कर्म्मभूरेषा अतोऽन्या भोगभूमयः"॥)

कर्म्मभूमिः, स्त्री, (कर्म्मणः पुण्यात्मसम्पाद्ययज्ञादि-रूपक्रियायाः भूमिः।) आर्य्यावर्त्तदेशः। इति

हेमचन्द्रः ॥ (भारतवर्षं यथा, विष्णुपुराणे २।३।१-२।
"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने ! ।
कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्" ॥
तथा च रामायणे २।१०९।२८। हेमा ।
"कर्म्मभूमिमिमां प्राप्य कर्त्तव्यं कर्म्म यत् शुभम्"।)

कर्म्ममूलं, क्ली, (कर्म्म यज्ञादिक्रियाजन्यं सत्कर्म्म-हेतुकं वा मूलं यस्य । कर्म्मणो मूलमिव मूलं यस्य वा ।) कुशतृणम् । इति शब्दचन्द्रिका ॥

कर्म्मयुगं, क्ली, (कृणाति हिनस्ति अन्योन्यं यत्र युगे-तत् कर्म्म । कृ हिंसायां + मनिन्प्रत्ययः । कर्म्म हिंसाप्रधानं युगं इति कर्म्मधारयः । कलेः हिंसा-प्रधानत्वात् तथात्वम् ।) कलियुगम् । इति त्रिकाण्ड-शेषः ॥

कर्म्मयोगः, पुं, (कर्म्मसु योगस्तत्कौशलम् ।) चित्त-शुद्धिजनकवैदिककर्म्म । यथा । निष्कामकर्म्म-णात्मज्ञानमित्युक्तं यथा ।
"अयमेव क्रियायोगो ज्ञानयोगस्य साधकः ।
कर्म्मयोगं विना ज्ञानं कस्यचिन्नैव दृश्यते ॥
सोऽपि दुरितक्षयद्वारा न साक्षात्" । इति मल-मासतत्त्वम् ॥ * ॥ तदनुष्ठानस्यावश्यकत्वं यथा ।
श्रीभगवानुवाच ॥
"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ! ।
ज्ञानयोगेन सांख्यानां कर्म्मयोगेण योगिनाम् ॥
न कर्म्मणामनारम्भान्नैष्कर्म्म्यं पुरुषोऽश्नुते ।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।
कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः ॥
कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्ज्जुन ! ।
कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ॥
नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्म्मणः ॥
यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।
तदर्थं कर्म्म कौन्तेय ! मुक्तसङ्गः समाचर ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्विषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्म्मसमुद्भवः ॥
कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥
एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ ! स जीवति ॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥
तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥
यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ ! सर्व्वशः ॥
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम् ।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥
सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत ।
कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥
न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
योजयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन् ॥
प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥
तत्त्ववित्तु महाबाहो गुणकर्म्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्म्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥
मयि सर्व्वाणि कर्म्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः ॥
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्व्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः" ॥
इति श्रीभगवद्गीतायां कर्म्मयोगो नाम ३ अ-ध्यायः ॥ * ॥ अन्यत् भगवन्मन्दिरादिकरणं वह्नि-पुराणे यमानुशासननामाध्याये द्रष्टव्यम् ॥

कर्म्मरङ्गः, पुं, स्त्री, (कर्म्मणे हिंसाक्रियायै तत्फल-भक्षणकारिणां रोगादिजननक्रियायै इत्यर्थः रज्यते पर्य्याप्यते । कृ हिंसायां इति धातो-र्मनिन् प्रत्ययेन निष्पन्नत्वात् ततो कर्म्मन् + रञ्ज + घञ् ।) फलवृक्षविशेषः । कामराङ्गा इति भाषा ॥ (यथा, रामायणे । ३ । १७ । ८ । गों ।
"सोमवृक्षान् कर्म्मरङ्गान् पियालांश्च क्वचित् क्वचित्" ।)
तत्पर्य्यायः । शिरालः २ वृहदम्लः ३ रुजाकरः ४ । इति शब्दचन्द्रिका ॥ कर्म्मारः ५ कर्म्मरकः ६ पीतफलः ७ कर्म्मरः ८ मुद्गरकः ९ मुद्गरः १० धाराफलः ११ कर्म्मारकः १२ । अस्य गुणाः । अम्लत्वम् । उष्णत्वम् । वातहारित्वम् । पित्तकारि-त्वञ्च । इति राजनिर्घण्टः ॥ तीक्ष्णत्वम् । कटुपाकि-त्वम् । अम्लपित्तकारित्वञ्च । इति राजवल्लभः ॥
तत्पक्वफलगुणाः । मधुराम्लत्वम् । बलपुष्टिरुचिप्रद-त्वञ्च । इति राजनिर्घण्टः ॥
("कर्म्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफवातहृत्" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे १म भागे ॥)

कर्म्मरी, स्त्री, (कर्म्म भैषज्योपयोगक्रियां राति ददाति । रा + कः । ततो गौरादित्वात् ङीष् ।) वंशरोचना । इति राजनिर्घण्टः । (वंशरोचना-शब्देऽस्या विवृतिर्ज्ञातव्या ॥)

कर्म्मवज्रः, पुं, (कर्म्म श्रौतस्मार्त्ताद्यनुष्ठानं तत्त-च्छास्त्रादेरध्ययनमाचरणादिकं वा वज्रं वज्र तुल्यदृढं यस्य । द्विजेतरजातेः श्रौतादिकर्म्मा-श्रुतिगोचराज्ञेयतादिहेतुकत्वात् वज्रवत् कठिनं प्रतिभातीति भावः ।) शूद्रः । इति महाभारतम् ॥

कर्म्मवाटी, स्त्री, (कर्म्मणां शास्त्रोक्ततिथिनिमित्ती-भूतक्रियाणां चन्द्रकलाक्रियाणां वा वाटीव । पुष्प-वाटिका यथा पुष्पादेराधारस्तद्वदित्यर्थः । ति-थीनां हि कर्म्मनिमित्ततया तथात्वम् ।) तिथिः । इति हेमचन्द्रः ॥

कर्म्मविपाकः, पुं, (कर्म्मणः अधर्म्ममूलकस्य अशुभ-फलजनकस्येति यावत् विपाकः परिणामः । इह रोगादिभोगजनकदुःखमयपरिणामः । अमुत्र नर-कभोगादिजनकदुःखमयपरिणामश्च ।) अशुभकर्म्म जन्यफलस्य विपाकः । रोगादिरूपजन्मान्तरीया-शुभकर्म्मफलभोग इति यावत् । तद्विवरणं यथा,—
"नरकात् प्रतिमुक्तस्तु पापयोनिषु जायते ।
पतितात् प्रतिगृह्याथावरयोनिं व्रजेद्बुधः ॥
नरकात् प्रतिमुक्तस्तु कृमिर्भवति याजकः ।
उपाध्यायव्यलीकन्तु कृत्वा श्वा भवति द्विजः ॥
तज्जायां मनसा वाञ्छंस्तद्द्रव्यं वाप्यसंशयम् ।
गर्द्दभो जायते जन्तुर्म्मित्रस्येवापमानकृत् ॥
मात्रादीनरमाक्रम्य शारिका संप्रजायते ।
पितरौ पीड़यित्वा तु कच्छपत्वञ्च गच्छति ॥
भर्त्तुः पिण्डमुपाश्नन्तो हित्वान्यानि निषेवयेत् ।
सोऽपि मोहसमापन्नो जायते वानरो मृतः ॥
न्यासापहर्त्ता नरकात् विमुक्तो जायते कृमिः ।
असूयकश्च नरकान्मुक्तो भवति राक्षसः ॥
विश्वासहर्त्ता च नरो मीनयोनौ प्रजायते ।
यवधान्यानि हृत्वा तु जायते मूषिको मृतः ॥
परदाराभिमर्षात्तु वृको घोरोऽभिजायते ।
भ्रातृभार्य्याप्रसङ्गत्वे कोकिलो जायते नरः ॥
गुर्व्वादिभार्य्यागमनात् शूकरो जायते नरः ।
यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः ॥
देवतापितृविप्राणामदत्त्वा योऽन्नमश्नुते ।
प्रमुक्तो नरकादापि वायसः स प्रजायते ॥
ज्येष्ठभ्रात्रवमानाच्च क्रौञ्चयोनौ प्रजायते ।
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ॥
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत् ।
कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा ॥
अशस्त्रं पुरुषं हत्वा नरः संजायते खरः ।
कृमिः स्त्रीवधकर्त्ता च बालहन्ता च जायते ॥

भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
हत्वान्नश्चैव मार्ज्जारस्तिलहश्चैव मूषिकः ॥
घृतं हृत्वा च नकुलः काको मद्गुरसामिषम् ।
मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलकः ॥
अपो हृत्वा तु पापात्मा वायसः सम्प्रजायते ।
हृते कांस्ये च हारीतः कपोतो वा प्रजायते ॥
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ।
कार्पासिके हृते क्रौञ्चो वह्निहर्त्ता वकस्तथा ॥
मयूरो वर्णकं हृत्वा शाकं पत्रञ्च जायते ।
जीवञ्जीवकतां याति रक्तवस्त्रापहन्नरः ॥
छुछुन्दरिः शुभान् गन्धान् वंशं हृत्वा शशो भवेत् ।
षण्ढः फलापहरणे काष्ठहृत् काष्ठकीटकः ॥
पुष्पापहृद्दरिद्रस्तु पङ्गुर्यानापहृन्नरः ।
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः ॥
गृहहृन्नरकान् गत्वा रौरवादीन् सुदारुणान् ।
तृणगुल्मलतावल्लीत्वक्सारतरुतां व्रजेत् ॥
एष एव क्रमो दृष्टो गोसुवर्णादिहारिणां ।
विद्यापहारी मूकश्च गत्वा च नरकान् बहून् ॥
असमिद्धेऽग्नौ हुते च मन्दाग्निः सम्प्रजायते ।
परनिन्दा कृतघ्नत्वं परमर्म्मविघातनम् ॥
नैष्ठुर्यं निर्घृणत्वञ्च परदारोपसेवनम् ।
परस्वहरणाशौचं देवतानाञ्च कुत्सनम् ॥
निकृत्या वञ्चनं नॄणां कार्पण्यञ्च नृणां बुधः ।
उपलक्षणादि जानीयात् मुक्तानां नरकादनु ॥
दयाभूतेषु सम्वादः परलोकं प्रतिक्रिया ।
सत्यं हितार्थता चोक्तिर्वेदप्रामाण्यदर्शनम् ॥
गुरुदेवर्षिपूजा च केवलं साधुसङ्गमः ।
सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः ।
अष्टाङ्गयोगविज्ञानात् प्राप्नोत्यात्यन्तिकं फलम्" ॥
इति गारुड़े कर्म्मविपाकः २२९ अध्यायः ॥

शातातपभृगुभरतोक्तः पापरोगप्रायश्चित्तानां विवरणग्रन्थः। प्रायश्चित्तविहीनपापिनां नरकान्ते प्रतिजन्म तत्पापसूचितरोगयुक्तं शरीरं भवति । नृणां दुष्कर्म्मजा रोगा जपदेवार्चनहोमदानादिभिः शमं यान्ति ॥*॥ महापातकजा रोगाः सप्तजन्मसु जायन्ते। तद्यथा—कुष्ठम् । राजयक्ष्मा। प्रमेहः । ग्रहणी । मूत्रकृच्छ्रम् । अश्मरी । कासः । अतीसारः । भगन्दरः। दुष्टव्रणः। गण्डमाला । पक्षाघातः । अक्षिनाशनम् । इत्यादयः । अत्र सम्पूर्णं प्रायश्चित्तम् ॥*॥ उपपापोद्भवा रोगाः पञ्चजन्मसु जायन्ते । तद्यथाः—जोलदरम् । यकृत् । प्लीहा । शूलम् । व्रणः । श्वासः । जीर्णज्वरः । छर्द्दिः । भ्रमः । मोहः । गलग्रहः । रक्तार्व्वुदम् । विसर्पः । इत्यादयः । अत्र अर्द्धं प्रायश्चित्तम् ॥*॥

पापसमुद्भवा रोगाः त्रिषु जन्मसु जायन्ते। तद्यथाः—दण्डापतानकः । चित्रवपुः । कम्पः । विचर्च्चिका । वल्मीकः । पुण्डरीकम् । इत्यादयः । अत्र पादांशं प्रायश्चित्तम् ॥*॥ अतिपापात् अर्श आद्याः रोगा भवन्ति अन्ये बहुधा रोगसङ्कराश्च ॥*॥ अथ दानादिषु साधारणविधिः । गोदाने सुशीला सवत्सा पयस्विनी गौः । वृषदाने शुक्लवस्त्रकाञ्चनसहितः शुभोऽनड्वान् । भूदाने दशनिवर्त्तनपरिमिता भूः । सुवर्णदाने शतनिष्कं स्वर्णं तदर्द्धार्द्धं वा । अश्वदाने उपस्करसहितसुशीलाश्वः । महिषदाने स्वर्णायुधयुक्तमहिषी। गजमहादाने सुवर्णफलसहितगजः । देवार्चने लक्षोच्चावचपुष्पदानम् । ब्राह्मणभोजने सहस्रद्विजेभ्यो मिष्टान्नदानम् । रुद्रजपे लक्षसङ्ख्यकपुष्पकरणकत्र्यम्बकपूजनानन्तरं एकादशरुद्रजपः तद्दशांशसघृतगुग्गुलहोमः वरुणमन्त्रैरभिषेचनञ्च। धान्यदाने षष्ठिसङ्ख्यकखारी परिमितधान्यम् । वस्त्रदाने कर्पूरमिश्रितपट्टवस्त्रद्वयम् ॥*॥

अथ प्रायश्चित्तग्रहणानुष्ठानादि। दश पञ्चाष्टचतुरो वा ब्राह्मणानुपवेश्य तेषामनुज्ञया प्रायश्चित्तमुपक्रम्य विष्णुं सम्पूज्य निजकाम्यया सङ्कल्प्य द्विजेभ्यो धेनुं शक्तितो दक्षिणाञ्च दत्त्वा तान् वस्त्रालङ्कारैरलङ्कृत्य दण्डप्रमाणेन प्रायश्चित्तं याचेत। तेषामनुज्ञया प्रायश्चित्तं यथाविधि कृत्वा परिपूर्णान् तान् यथाविधि अर्चयित्वा तेभ्योऽनुज्ञामाशिषञ्च प्रतिगृह्य ब्राह्मणान् भोजयित्वा बन्धुभिः सह भोक्तव्यम् । इति शातातपीयकर्म्मविपाकप्रथमाध्यायविवरणम् ॥*॥ जन्मान्तरीयमहापातकशेषचिह्नकुनखादिरोगाणां प्रायश्चित्तं पराकव्रतं महापातकादतिपातकस्य गुरुत्वात्तच्छेषजन्यगलत् कुष्ठरोगस्य प्रायश्चित्तं द्विगुणम् । इति स्मार्त्ताः ॥*॥

## अथ शातातपोक्तहिंसास्तेयाऽगम्यागमनाऽगतिप्रायश्चित्तानि क्रमेण लिख्यन्ते ॥

| पापी | रोगी | प्रायश्चित्तम् |
|---|---|---|
| १ अजाघाती … … … | १ अधिकाङ्गः … … … | १ विचित्रवस्त्रयुक्तां अजां दद्यात् ॥ |
| २ अश्वहन्ता … … … | २ वक्रतुण्डः … … … | २ शतपलानि चन्दनानि दद्यात् ॥ |
| ३ उरभ्रघाती … … … | ३ पाण्डुरोगी … … … | ३ ब्राह्मणाय पलपरिमितकस्तूरिकां दद्यात् ॥ |
| ४ उष्ट्रहन्ता … … … | ४ विकृतस्वरः … … | ४ कर्पूरकं फलं दद्यात् ॥ |
| ५ काकघाती … … … | ५ कर्णहीनः … … … | ५ कृष्णां गां दद्यात् ॥ |
| ६ कारहन्ता … … … | ६ रूक्षः… … … … | ६ शुक्लवर्णवृषभं दद्यात् ॥ |
| ७ खरहन्ता … … … | ७ खररोमा … … … | ७ कृष्णगुल्मवत् प्रायश्चित्तं कुर्य्यात् ॥ |
| ८ गजघाती … … … | ८ सर्व्वकार्य्येष्वसिद्धार्थः … | ८ प्रासादं कारयित्वा गणेशप्रतिमां स्थापयेत् अथवा कुलत्थशाकैः पूपैश्च गणशान्तिपूर्व्वकं लक्षसंख्यकगणेशमन्त्रं जपेत् ॥ |
| ९ गोचहा … … … | ९ कुष्ठी निर्व्वंशश्च … … | ९ शतप्राजापत्यव्रतञ्चरित्वा ब्राह्मणाय भूमिं दक्षिणां दत्त्वा भारतं शृणुयात् ॥ |
| १० गोवधी … … … | १० कुष्ठी … … … | १० पञ्चपल्लवसंयुक्तपञ्चवर्णसमन्वितरक्तचन्दनलिप्ताङ्गरक्तपुष्पाम्बरान्वितैकरक्तकुम्भं दक्षिणस्यां दिशि संस्थाप्य तत्र तिलचूर्णपूरिततामपात्रं विन्यस्य तदुपरि निष्कमितसुवर्णनिर्म्मितयमदेवं पुरुषसूक्तमन्त्रेण संपूज्य पापं मे शाम्यतामिति प्रार्थयेत्। ततः सामविद् ब्राह्मणस्तत्र कलसे सामपारायणं कुर्य्यात् । ततो दशांशं सर्षपं दत्त्वा पात्रमाल्याभिषेचनं कुर्य्यात् । ततो "यमोऽपि महिषारूढ़ो दण्डपाणिर्भयानकः। दक्षिणाशापतिर्देवो मम पापं व्यपोहतु"॥ इति मन्त्रेण यजमानो यमं विसृज्य तं आचार्य्याय निवेद्य सद्भक्तिमाचरेत् ॥ |
| ११ तरक्षुहन्ता … … … | ११ केकरेक्षणः… … … | ११ गुल्मसमर्थां धेनुं दद्यात् ॥ |

| पापी | रोगी— | प्रायश्चित्तम् |
|---|---|---|
| १२ पितृहा ... ... ... | १२ चेतनाहीनः ... ... | १२ त्रिंशत् प्राजापत्यानि कृत्वा पलपरिमितां सुवर्णनावं कारयित्वा ताम्रपात्रे रूप्यमयं उम्भं स्थापयित्वा निष्कपरिमितस्वर्णनिर्म्मितं विष्णुं पट्टवस्त्रेण संवेष्ट्य विधानतः पूजयेत्। तत् सर्व्वं ब्राह्मणाय दत्त्वा ब्राह्मणं विसर्जयेत्। अन्येभ्योऽपि विप्रेभ्यो भूयसीं दक्षिणां दद्यात् ॥ |
| १३ बालघाती ... ... ... | १३ मृतवत्सः ... ... ... | १३ ब्राह्मणेनाहूनं यथाविधि हरिवंशश्रवणञ्च कुर्य्यात्। महारुद्रजपान् कारयेत्। तद्दशांशेन अयुतसंख्यकदूर्व्वया च कृत्वा दक्षिणासहितनिष्कपरिमितैकादशस्वर्णानि विभवानुसारतः एकादशपलानि च दद्यात्। अन्यब्राह्मणेभ्यो यथाशक्ति दक्षिणां दद्यात्। तत आचार्य्यो वरुणदैवतमन्त्रैर्दम्पती स्नापयेत्। यजमान आचार्य्याय वस्त्रालङ्करणानि दद्यात् ॥ |
| १४ ब्रह्महा ... ... ... | १४ पाण्डुकुष्ठी ... ... ... | १४ यजमानश्चतुर्दिक्षु पञ्चपल्लवपञ्चवर्णसंयुक्तचतुरः कलसान् संस्थाप्य तन्मध्ये कुम्भोपरि रौप्यमष्टदलपद्मं विन्यस्य तदुपरि पलार्द्धार्द्धपरिमितसुवर्णनिर्म्मितदशभुजं चतुर्म्मुखदेवं संन्यस्य प्रत्यहं त्रिकालं पुरुषसूक्तेन पूजयेत्। ततः पूर्व्वादिकुम्भेषु ब्रह्मचारिणो ब्राह्मणाः ऋग्वेदप्रभृतीन् स्वस्ववेदान् शनैः पठेयुः। ततो मध्यकुम्भे तिलाज्यघृतहेमभिर्ग्रहशान्तिपुरःसरं दशांशेन होमं कुर्य्यात्। ततो ब्राह्मणो द्वादशाहेनेदं कर्म्म समाप्य तत्र पीठे यथाविधि यजमानमभिषिञ्चेत्। ततो यजमानो ब्राह्मणेभ्यो यथाशक्ति गोभूहेमतिलोदकानि दत्त्वा कुम्भादीन् आचार्य्याय निवेदयेत् ॥ |
| १५ मातृहा ... ... ... | १५ मूकः ... ... ... | १५ चान्द्रायणव्रतं चरित्वा "सरस्वति जगन्मातः शब्दब्रह्मादिदेवते। दुष्कर्म्मकरणात् पापात् पाहि मां परमेश्वरि" ॥ इमं मन्त्रमुच्चार्य्य पलपरिमितसुवर्णसहितपुस्तकं ब्राह्मणाय दत्त्वा तं ब्राह्मणं विसर्ज्जयेत् ॥ |
| १६ महिषीघाती ... ... | १६ कृष्णगुल्मी ... ... ... | १६ निष्कत्रयपरिमितस्वर्णमयीं प्रकृतिं दद्यात् ॥ |
| १७ मातृहा ... ... ... | १७ अन्धः ... ... ... | १७ पितृहवत् प्रायश्चित्तं कुर्य्यात् ॥ |
| १८ मार्जारहा ... ... ... | १८ पीतपाणिः... ... ... | १८ निष्कमितस्वर्णनिर्म्मितं पारावतं दद्यात् ॥ |
| १९ राजहा ... ... ... | १९ क्षयरोगी ... ... ... | १९ गोभूहिरण्यमिष्टान्नजलवस्त्राणि घृतधेनुं तिलधेनुञ्च दद्यात् ॥ |
| २० वकघाती ... ... ... | २० दीर्घनसः ... ... ... | २० शुक्लां गां दद्यात् ॥ |
| २१ वैश्यहन्ता ... ... ... | २१ रक्तार्ब्बुदी ... ... ... | २१ चत्वारि प्राजापत्यव्रतानि चरित्वा सप्तधान्यानि उत्सृजेत् ॥ |
| २२ शुकशारिकाघाती... ... | ३२ स्खलितवाक् ... .. | २२ ब्राह्मणाय सदक्षिणं सच्छास्त्रपुस्तकं दद्यात् ॥ |
| २३ शूकरहन्ता... ... ... | २३ दन्तुरः ... ... ... | २३ सदक्षिणं घृतकुम्भं दद्यात् ॥ |
| २४ शूद्रहन्ता ... ... ... | २४ दण्डापतानकः ... ... | २४ एकं प्राजापत्यव्रतञ्चरित्वा सदक्षिणैकधेनुं दद्यात् ॥ |
| २५ शृगालहा ... ... ... | २५ विपादकः ... ... ... | २५ खञ्जवत् प्रायश्चित्तं कुर्य्यात् ॥ |
| २६ स्त्रीहन्ता ... ... ... | २६ अतिसारी ... ... ... | २६ दशाश्वत्थवृक्षान् रोपयेत् शर्करधेनुं दद्यात् शतं ब्राह्मणांश्च भोजयेत् ॥ |
| २७ हरिणघाती... ⋮ ... | २७ खञ्जः ... ... ... | २७ पलपरिमितसुवर्णाश्वं दद्यात् ॥ * ॥ "हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता। तदर्द्धार्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात्" ॥ इति शातातपोक्तकर्म्मविपाकद्वितीयाध्यायहिंसाप्रायश्चित्तविवरणम् ॥ * ॥ |
| १ अभक्ष्यभोक्ता ... ... | १ कृमिकोदरः ... ... | १ भीमपञ्चकोपवासं कुर्य्यात् ॥ |
| २ अस्पृश्यस्पृष्टान्नभोक्ता ... | २ कृमिलोदरः ... ... | २ त्रिरात्रमुपवसेत् ॥ |
| ३ गर्भपातकर्त्ता ... ... | ३ यकृत्प्लीहजलोदररोगी ... | ३ पलत्रयपरिमितसुवर्णरूप्यताम्रा॰ जलधेनुदानं कुर्य्यात् ॥ |
| ४ दावाग्निदः ... ... ... | ४ रक्तातिसारी ... ... | ४ उदपानं वटवृक्षरोपणञ्च कुर्य्यात् ॥ |
| ५ दुष्टवाग्मी ... ... ... | ५ खण्डितः ... ... ... | ५ दुग्धसमन्वितघटद्वयं पलद्वयपरिमितरूप्यञ्च द्विजातये दद्यात् ॥ |
| ६ द्रव्ये सति कदन्नदः... ... | ६ मन्दोदराग्निः ... ... | ६ प्राजापत्यत्रयं कृत्वा शतं द्विजान् भोजयेत् ॥ |
| ७ धूर्त्तः... ... ... ... | ७ अपस्मारी ... ... ... | ७ ब्रह्मकूर्च्चमयीं धेनुं दत्त्वा सदक्षिणां गां दद्यात् ॥ |
| ८ परनिन्दावान् ... ... | ८ खल्लीटः ... ... ... | ८ काञ्चनसहित धेनुं दद्यात् ॥ |
| ९ परान्नविघ्नकर्त्ता ... ... | ९ अजीर्णी ... ... ... | ९ यथाविधि लक्षहोमं कुर्य्यात् ॥ |
| १० परोपतापी ... ... ... | १० शूली .... ... ... | १० अन्नदानं रुद्रजपञ्च प्रकुर्व्वीत ॥ |
| ११ परोपहासकृत् ... ... | ११ काणः ... ... ... | ११ सकाञ्चनां गां दद्यात् ॥ |
| १२ पिशुनः ... ... ... | १२ श्वासकासी | १२ सहस्रपलसम्मितं घृतं दद्यात् ॥ |

| पापी | रोगी | ायश्चित्तम् |
|---|---|---|
| १३ प्रतिमाभङ्गकारी … … | १३ अप्रतिष्ठः … … … | १३ वत्सरत्रयपर्य्यन्तं प्रतिदिनं अश्वत्थसेचनानन्तरं गृह्योक्तविधिना समां गम्यानुद्वाहयेत् सुपूजितं विघ्नराजञ्च संस्थापयेत् ॥ |
| १४ मद्यपः … … … | १४ रक्तपित्ती … … … | १४ सर्पिषो घटं सहिरण्यं मधुनोऽर्द्धघटञ्च दद्यात् ॥ |
| १५ मार्गहा … .. … | १५ पादरोगी … … … | १५ अश्वं दद्यात् ॥ |
| १६ रजस्वलादृष्टान्नभोक्ता … | १६ कृमिलोदरः … … | १६ त्रिरात्रं गोमूत्रयावकं भुञ्जीत ॥ |
| १७ विषदः … … … | १७ छर्द्दिरोगी … … … | १७ दश पयस्विनीर्गा दद्यात् ॥ |
| १८ सभायां पक्षपाती … … | १८ पक्षघातवान् … … | १८ सत्यवर्त्तिने निष्कत्रयपरिमितं हेम दद्यात् ॥ |
| १९ सुरापः .. … … | १९ श्यावदन्तः … … … | १९ प्राजापत्यव्रतञ्चरित्वा सप्ततुलापरिमितशर्करां दत्त्वा महारुद्रं जप्त्वा तद्दशांशं तिलैर्हुत्वा वरुणदैवतमन्त्रैरभिषेकं कुर्य्यात् ॥ |
| २० सुरालये जले वा शकृन्मूत्रकारी … | २० गुदरोगी … … … | २० मासं व्याप्य सुरार्चनं गोद्वयदानं प्राजापत्यमेकञ्च कुर्य्यात् ॥ * ॥<br>इति शातातपोक्तकर्म्मविपाकतृतीयाध्यायप्रकीर्णप्रायश्चित्तविवरणम् ॥ * ॥ |
| १ अगम्याभिगामी … … | १ भुवमण्डली … … | १ कार्पासभारकांस्यदोहसंयुक्तसवत्सकतिलषष्टिमितहेमधेनुं "सुरभी वैष्णवी माता मम पापं व्यपोहतु" इमं मन्त्रमुच्चार्य्य दद्यात् ॥ |
| २ अन्ययोनिगामी … … | २ गुदस्तम्भी .. .. .. | २ मासं व्याप्य प्रतिदिनं सहस्रसङ्ख्यकमलकरणकशिरःस्नानं कुर्य्यात्। स्त्रीणामपि तत्तत्पुरुषसंसर्गात्तत्तत्प्रायश्चित्तम् ॥ |
| ३ आमान्नहारी … … | ३ हीनदीप्तिः … … … | ३ निष्कद्वयस्वर्णनिर्म्मिताश्विनीकुमारौ दद्यात् ॥ |
| ४ इक्षोर्विकारहारी… … | ४ उदरगुल्मवान् … … | ४ गुड़धेनुं प्रदद्यात् ॥ |
| ५ ऊर्णाहारी… … … | ५ लोमशः … … … | ५ कम्बलान्वितनिष्कमितस्वर्णनिर्म्मितवह्निमूर्त्तिं अर्चयित्वा ब्राह्मणाय दद्यात् ॥ |
| ६ औषधापहर्त्ता … … | ६ सूर्य्यावर्त्तरोगी … … | ६ मासं व्याप्य सूर्य्यार्घ्यं काञ्चनञ्च दद्यात् ॥ |
| ७ कन्दमूलहारी … … | ७ कृष्णपाणिः… … … | ७ यथाशक्ति देवगृहं उद्यानञ्च कुर्य्यात् ॥ |
| ८ कांस्यहारी … … … | ८ पुण्डरीकसमन्वितः … | ८ ब्राह्मणमलङ्कृत्य तस्मै शतपलं कांस्यं दद्यात् ॥ |
| ९ गुरुजायाभिगामी… … | ९ मूत्रकृच्छ्री … … … | ९ नीलमाल्यादिभूषितनीलवस्त्राच्छन्नघटं पश्चिमस्यां दिशि संस्थाप्य तदुपरि ताम्रपात्रे षड्निष्कस्वर्णनिर्म्मितवरुणं पुरुषसूक्तेन यजेत। सामवेदी ब्राह्मणस्तत्र सामवेदमाचरेत् विंशतिनिष्कमितसुवर्णपुत्तलिकां निष्पापोऽहमित्युच्चार्य्य ब्राह्मणाय दद्यात्। "यादसामधिपो देवो विश्वेषामधिपो वरः। संसारनौकर्णधारो वरुणः पावनोऽस्तु मे" ॥ इति मन्त्रेण आचार्य्याय स्वर्णवरुणं दद्यात् ॥ |
| १० चाण्डालीगामी … … | १० हीनमुष्कः … … … | १० मातृगामिवत् प्रायश्चित्तं कुर्य्यात् ॥ |
| ११ तपस्विनीप्रसङ्गी … … | ११ प्रमेहगदी … … … | ११ मासं व्याप्य रुद्रं जपेत् यथाशक्ति काञ्चनञ्च दद्यात् ॥ |
| १२ तपस्विनीसङ्गमी … … | १२ अश्मरीगदी … … | १२ मधुधेनुं हिरण्यसहितशतद्रोणपरिमिततिलञ्च दद्यात् ॥ |
| १३ ताम्बूलहारी… … … | १३ श्वेतौष्ठः … … … | १३ सदक्षिणोत्तमविद्रुमद्वयं दद्यात् ॥ |
| १४ ताम्रचौरः … … … | १४ औडुम्बरी … … … | १४ प्राजापत्यव्रतं शतपलपरिमितताम्रदानञ्च कुर्य्यात् ॥ |
| १५ तैलचौरः .. … … | १५ कण्ड्वादिपीड़ितः … … | १५ उपोष्य विप्राय तैलघटद्वयं दद्यात् ॥ |
| १६ त्रपुहारी … … … | १६ नेत्ररोगवान् … … | १६ उपोष्य विधिवद्घृतधेनुं दद्यात् ॥ |
| १७ दधिचौरः … … … | १७ मदवान् … … … | १७ विप्राय दधिधेनुं दद्यात् ॥ |
| १८ दारुहारी … … … | १८ छिन्नपाणिः … … | १८ विदुषे पलद्वयपरिमितकुङ्कुमं दद्यात् ॥ |
| १९ दीक्षितस्त्रीप्रसङ्गी… … | १९ दुष्टरक्तदृक्रोगी … … | १९ प्राजापत्यद्वयं कुर्य्यात् ॥ |
| २० दुग्धहारी … … … | २० बद्धमूत्रकः … … … | २० ब्राह्मणाय यथाविधि दुग्धधेनुं दद्यात् ॥ |
| २१ देवहारी … … … | २१ विविधज्वरी … … | २१ तत्र ज्वरे कर्णे रुद्रं जपेत् महाज्वरे महारुद्रं रौद्रज्वरे अतिरौद्रं वैष्णवज्वरे महारुद्रातिरौद्रौ च जपेत् ॥ |
| २२ नानाविधद्रव्यचौरः … | २२ ग्रहणीयुक्तः … … | २२ शक्त्यनुसारेणान्नोदकवस्त्राणि हेम च दद्यात् ॥ |
| २३ पक्वान्नहारी … … … | २३ जिह्वारोगी … … | २३ लक्षसंख्यकगायत्रीं जपेत् तिलकरणकं तद्दशांशहोमञ्च कुर्य्यात् ॥ |
| २४ पट्टसूत्रहर्त्ता … … | २४ विलोमा … … … | २४ धेनुं दद्यात् ॥ |
| २५ पश्वयोनिगामी … … | २५ मूत्राघाती … … … | २५ तिलपात्रद्वयं दद्यात् ॥ |
| २६ पितृव्यस्त्रगन्ता … … | २६ दक्षिणांशशयी … … | २६ शक्तितः धर्मं दद्यात् ॥ |
| २७ पुत्रजायाभिगामी … … | २७ कृष्णकुष्ठी … | २७ [illegible]श्चित्तस्यार्द्धं घृताक्ततिलकरणकदशांशहोमञ्च कुर्य्यात् ॥ |

| पापी | रोगी | प्रायश्चित्तम् |
|---|---|---|
| २८ फलहारी ... ... ... | २८ श्रणिताङ्गुलिः ... ... | २८ द्विजातये अयुतसंख्यकनानाफलं दद्यात् ॥ |
| २९ आत्मजायाभिगामी ... | २९ गुल्मकुष्ठी ... ... ... | २९ स्वसुतागमनप्रायश्चित्तस्यार्द्धं घृताक्ततिलकरणकदशांशहोमञ्च कुर्य्यात् ॥ |
| ३० मधुचौरः ... ... ... | ३० नेत्ररोगवान् ... ... | ३० उपवासं कृत्वा मधुधेनुं दद्यात् ॥ |
| ३१ मातुलानीगन्ता ... ... | ३१ एलकुञ्जः ... ... ... | ३१ कृष्णाजिनं प्रदद्यात् ॥ |
| ३२ मातृगामी ... ... ... | ३२ लिङ्गहीनः ... ... ... | ३२ उत्तरतः कृष्णमाल्यादिभूषितकृष्णवस्त्रसमाच्छन्नकुम्भं विन्यस्य तदुपरि कांस्यपात्रे निष्कषट्कमितसुवर्णनिर्म्मितनरवाहनकुबेरं पुरुषसूक्तेन यजेत्। अथर्ववेदविद्ब्राह्मणस्तत्र अथर्व्वोक्तकर्म्म कुर्य्यात्। ब्राह्मणाय विंशतिनिष्कपरिमितसुवर्णनिर्म्मितपुत्रिकां निष्पापोऽहमिति ब्रुवन् दद्यात्। "निधीनामधिपो देवः शङ्करस्य प्रियः सखा। सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु"॥ इति मन्त्रेण तं कुबेरं आचार्य्याय दद्यात् ॥ |
| ३३ मातृष्वसृगन्ता ... ... | ३३ नानाङ्गे व्रणवान् ... ... | ३३ दासदानं अगम्यागमनप्रायश्चित्तञ्च कुर्य्यात् ॥ |
| ३४ मृतभार्य्याभिगामी... ... | ३४ मृतभार्य्यः ... ... ... | ३४ एकब्राह्मणं विवाहयेत् ॥ |
| ३५ रक्तवस्त्रप्रवालहारी ... | ३५ रक्तवातवान् ... ... | ३५ मणिरागसमन्वितां सवत्सां महिषीं दद्यात् ॥ |
| ३६ लौहहारी ... ... ... | ३६ कर्व्वूराङ्गः ... ... ... | ३६ एकदिनमुपोष्य शतपललौहं दद्यात् ॥ |
| ३७ वस्त्रहारी ... ... ... | ३७ कुष्ठी... ... ... ... | ३७ निष्कमितहेमनिर्म्मितप्रजापतिं वस्त्रयुग्मञ्च दद्यात् ॥ |
| ३८ विद्यापुस्तकहारी ... ... | ३८ मूकः ... ... ... | ३८ ब्राह्मणाय सदक्षिणं न्यायेतिहासं दद्यात् ॥ |
| ३९ विप्ररत्नापहारी ... ... | ३९ अनपत्यः ... ... ... | ३९ महारुद्रजपादिकं कुर्य्यात् तद्दशांशपलाशसमिद्भिर्यथाविधि जुहुयात् मृतवत्सोक्तसर्व्वकर्म्म च कुर्य्यात् ॥ |
| ४० विप्रहेमहृत् ... ... | ४० कुक्षघ्नः ... ... ... | ४० चान्द्रायणत्रयानन्तरं सुवर्णशतं दद्यात् ॥ |
| ४१ शाकहारी ... ... ... | ४१ नीललोचनः ... ... | ४१ ब्राह्मणाय महानीलमणिद्वयं दद्यात् ॥ |
| ४२ शुक्तिहारी ... ... ... | ४२ पाण्डुमूर्द्धजः ... ... | ४२ उपवासानन्तरं पलशतशुक्तिं दद्यात् ॥ |
| ४३ सौगन्धिकहारी ... ... | ४३ दुर्गन्धाङ्गः ... ... ... | ४३ अग्नौ लक्षसंख्यकपद्मैर्होमं कुर्य्यात्॥ |
| ४४ स्वगोत्रस्त्रीप्रसङ्गी ... ... | ४४ भगन्दररोगी ... ... | ४४ महिषीं दद्यात् ॥ |
| ४५ स्वजातिस्त्रीगामी ... ... | ४५ हृदयव्रणी ... ... ... | ४५ प्राजापत्यद्वयं कुर्य्यात् ॥ |
| ४६ स्वसुतागामी ... ... | ४६ रक्तकुष्ठी ... ... ... | ४६ पूर्व्वतः पीतमाल्यादिभूषितपीतवस्त्रसमाच्छन्नकलसं संस्थाप्य तस्योपरि स्वर्णपात्रं निष्कषट्कमितसुवर्णनिर्म्मितवासवं पुरुषसूक्तेन यजेत्। तत्र ऋग्यजुःसामानि समाचरेत् ब्राह्मणं सम्पूज्य निष्पापोऽहमिति ब्रुवन् तस्मै शतसुवर्णनिर्म्मितपुत्तिकां दद्यात्। "देवानामधिपो देवो वज्री विष्णुनिकेतनः। शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु"॥ इति मन्त्रं पठेत् ॥*॥ |

इति शातातपीयकर्म्मविपाके चतुर्थाध्यायोक्तस्तेयप्रायश्चित्तस्य तथा पञ्चमाध्यायोक्तागम्यागमनप्रायश्चित्तस्य च विवरणम् ॥*॥

| पापयुक्तः— | मरणविशेषविशिष्टः— | और्द्ध्वदेहिकपूर्व्वकालीनतत्पुत्रादिकर्त्तव्यप्रायश्चित्तम्। |
|---|---|---|
| १ अनध्यायेऽध्ययनकर्त्ता ... | १ विद्युदाहतः ... ... | १ विद्यादानं कुर्य्यात् ॥ |
| २ अस्पृशी ... ... ... | २ अस्पर्शसङ्गी मृतः... ... | २ वेदपारायणं कुर्य्यात् ॥ |
| ३ कारवृत्तिः ... ... ... | ३ वृकहतः वृषहतः ... | ३ यथाशक्ति काञ्चनं दद्यात् ॥ |
| ४ कुमतिप्रदः ... ... ... | ४ विषहतः ... ... ... | ४ क्षेत्रसंयुतां मेदिनीं दद्यात् ॥ |
| ५ कुमारीगन्ता ... ... | ५ व्याघ्रादिहतः ... ... | ५ परकन्यां विवाहयेत् ॥ |
| ६ कृत्तवासाः निकृन्तनश्च ... | ६ कृमिहतः ... ... ... | ६ द्विजाय गोधूमान्नं दद्यात् ॥ |
| ७ क्रतुनिन्दकः श्रुतिनिन्दकोऽपि पाठः ... | ७ शृङ्गिहतः ... ... ... | ७ सदक्षिणां महिषीं दद्यात् ॥ |
| ८ गुरुघाती ... ... ... | ८ शय्यामृतः ... ... ... | ८ निष्कमितसुवर्णनिर्म्मितपात्रस्थितविष्णुधिष्ठिततुलसीसमन्वितशय्यां दद्यात् ॥ |
| ९ दक्षिणाचौरः ... ... | ९ दवहतः दारुहतः ... | ९ सदने सभां कुर्य्यात् ॥ |
| १० द्रोही ... ... ... | १० संस्कारहीनमृतः ... ... | १० कुमारं विवाहयेत् ॥ |
| ११ द्विजनिन्दाकर्त्ता ... ... | ११ प्रस्तरहतः ... ... ... | ११ सवत्सां पयस्विनीं गां दद्यात् ॥ |
| १२ द्विजवस्त्रहृत् ... ... | १२ अनपत्यमृतः ... ... | १२ नवतिं कृच्छ्राणि चरेत् ॥ |

| पापयुक्तः— | मरणविशेषविशिष्टः— | और्द्ध्वदेहिकपूर्व्वकालीनपुत्त्रादिकर्त्तव्यप्रायश्चित्तम् । |
|---|---|---|
| १३ निक्षेपहारकः ... ... | १३ कुक्कुरहतः ... ... ... | १३ अत्र प्रायश्चित्तस्यानुक्तत्वात् व्याघ्रादिहत इत्यत्रादिपददर्शनाच्च तत्रोक्तप्रायश्चित्तं युक्तम् ॥ |
| १४ नृपनाशकः ... ... ... | १४ गजहतः ... ... ... | १४ चतुर्निष्कमितहैमगजं दद्यात् ॥ |
| १५ पशुहिंसकः ... ... | १५ चौरहतः ... ... ... | १५ धेनुं दद्यात् ॥ |
| १६ पाशिकः ... ... ... | १६ अरण्ये शूकरहतः ... | १६ कुक्कुरहतवत् ॥ |
| १७ मत्सरी. ... ... ... | १७ शौचहीनमृतः ... ... | १७ द्विनिष्कस्वर्णजहरिं दद्यात् ॥ |
| १८ मद्यविक्रेता... ... ... | १८ पतितमृतः... ... ... | १८ षोड़शप्राजापत्यानि कुर्य्यात् ॥ |
| १९ मित्रभेदी ... ... ... | १९ वैरिहतः ... ... ... | १९ वृषं दद्यात् ॥ |
| २० मेदिनीचौरः ... ... | २० भृगुपातहतः ... ... | २० धान्यपर्व्वतं दद्यात् ॥ |
| २१ यज्ञहानिकर्त्ता ... ... | २१ वह्निहतः ... ... ... | २१ स्वशक्तित उपानहं दद्यात् ॥ |
| २२ राजकुमारघ्नः ... ... | २२ राजहतः ... ... ... | २२ हिरण्मयपुरुषं दद्यात् ॥ |
| २३ राजदन्तिहृत् ... ... | २३ वृक्षहतः ... ... ... | २३ स्वर्णसंयुतं सौवर्णवृक्षं दद्यात् ॥ |
| २४ लौहहृत् ... ... ... | २४ अतीसारमृतः ... ... | २४ संयतो लक्षसङ्ख्यकगायत्रीं जपेत् ॥ |
| २५ विषदः ... ... ... | २५ सर्पदष्टः ... ... ... | २५ नागबलिदानं काञ्चनदानञ्च कुर्य्यात् ॥ |
| २६ शङ्करद्रोही... ... ... | २६ शृङ्गिहतः ... ... ... | २६ वस्त्रसंयुक्तवृषभं दद्यात् ॥ |
| २७ शास्त्रहृत् ... ... ... | २७ वान्तमाश्रित्य मृतः- अस्पृश्यस्पर्शनमृतश्च ... | २७ सच्छास्त्रपुस्तकं दद्यात् ॥ |
| २८ सूचकः ... ... ... | २८ शकटहतः... ... ... | २८ उपस्करान्वितं अश्वं दद्यात् ॥ |
| २९ सेतुभेदी ... ... ... | २९ जलहतः ... ... ... | २९ निष्कत्रयमितस्वर्णवरुणं दद्यात् ॥ |
| ३० स्वदर्पकार्य्यकारकः... ... | ३० साकिन्यादिहतः ... ... | ३० यथोचितं रुद्रं जपेत् ॥ |
| ३१ हिंस्रः ... ... ... | ३१ उद्बन्धनमृतः ... ... | ३१ पयस्विनीं गां दद्यात् ॥ |
| | ३२ हयाहतः ... ... ... | ३२ निष्कत्रयमितं स्वर्णं दद्यात् ॥ |
| | ३३ कपिहतः ... ... ... | ३३ कनकनिर्म्मितकपिं दद्यात् ॥ |
| | ३४ विसूचिकामृतः ... .. | ३४ घृतं द्विजान् भोजयेत् ॥ |
| | ३५ कण्ठकवलमृतः ... ... | ३५ तिलधेनुं दद्यात् ॥ |
| | ३६ केशरोगमृतः ... ... | ३६ अष्टौ कृच्छ्रान् समाचरेत् ॥ * ॥ |

इति शातातपीयकर्म्मविपाके अगतीनां विशेषप्रायश्चित्तम् ॥ * ॥

अगतीनां साधारणप्रायश्चित्तम् ।

सफलसप्तधान्योपरि पञ्चपल्लवसर्व्वौषधिसंयुक्तं कृष्णवस्त्रसमाच्छन्नमकालमूलं कलसं संस्थाप्य तत्र महिषासनसंस्थितं चतुर्भुजं दण्डहस्तं स्वर्णकुण्डल-संयुतं निष्कपरिमितं प्रेतरूपिणं पुरुषं संस्थाप्य पूजयेत् । प्रत्यहं पुरुषसूक्तेन दुग्धेन तर्पयेत् तत्र कलसे षड़ङ्गरुद्रं जपेत् । यमसूक्तेन यमपूजादिकं आत्मविशुद्ध्यर्थं गायत्रीजपं ग्रहशान्तिपूर्व्वकदशांशतिलहोमञ्च कुर्य्यात् । अज्ञातगोत्रविप्राय सतिलमुदकं दद्यात् ।

"इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम् ।
ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम" ॥

इति मन्त्रेण मधुशर्करायुक्तप्रस्थमितकृष्णतिल-पिष्टपिण्डं प्रेतरूपाय दद्यात् । यजमानः प्रेत-मुद्दिश्य तिलपात्रसंयुतान् द्वादशकृष्णकलसान् विष्णुमुद्दिश्यैकं कलसञ्च दद्यात् । वरायुधधरः शुचिराचार्य्यः वरुणदैवतमन्त्रैः कलसोदकैर्दम्पती अभिषिञ्चेत् । ततो यजमान आचार्य्याय दक्षिणां दद्यात् नारायणबलिञ्च कुर्य्यात् ॥ * ॥

"एवं कृते विधानेन प्रकुर्य्यादौर्द्ध्वदेहिकम् ।
ततः प्रेतत्वनिर्म्मुक्ताः पावितास्तर्पितास्तथा ॥
दद्युः सुतांश्च पौत्रांश्च आयुरारोग्यसम्पदः" ॥

इति शातातपीयकर्म्मविपाकषष्ठाध्यायोक्ता-गतिप्रायश्चित्तविवरणम् ॥ * ॥

(मार्कण्डेयोक्ताः कर्मविपाकाश्च । यथा, तत्रैव १५ अध्याये उक्ताः ।

"पतितात् प्रतिगृह्यार्थं खरयोनिं व्रजेद्द्विजः ।
नरकात् प्रतिमुक्तस्तु कृमिः पतितयाजकः ॥
उपाध्यायव्यलीकन्तु कृत्वा श्वा भवति द्विजः ।
तज्जायां मनसा वाञ्छन् तद्द्रव्यं चाप्यसंशयम् ॥
गर्द्दभो जायते जन्तुः पित्रोश्चाप्यवमानकः ।
मातापितरावाक्रुश्य शारिका सम्प्रजायते ॥
भ्रातुः पत्न्यवमन्ता च कपोतत्वं प्रपद्यते ।
तामेव पीड़यित्वा तु कच्छपत्वं प्रपद्यते ॥
भर्तृपिण्डमुपाश्नन् यस्तदिष्टं न निषेवते ।
सोऽपि मोहसमापन्नो जायते वानरो मृतः ॥
न्यासापहर्त्ता नरकात् विमुक्तो जायते कृमिः ।
[illegible] मुक्तो भवति राक्षसः ॥

विश्वासहन्ता च नरो मीनयोनौ प्रजायते ।
धान्यं यवांस्तिलान्माषान् कुलत्थान् सर्षपांश्चणान् ।
कलायान् कलमान् मुद्गान् गोधूमानतसीस्तथा ।
शस्यान्यन्यानि वा हृत्वा मोहाज्जन्तुरचेतनः ॥
सञ्जायते महावक्त्रो मूषिको बभ्रुसन्निभः ।
परदाराभिमर्षात्तु वृको घोरोऽभिजायते ॥
श्वा शृगालो वको गृध्रो व्याड़ः कङ्कस्तथा क्रमात् ।
भ्रातृभार्य्यांश्च दुर्बुद्धिर्योधर्षयति पापकृत् ॥
पुंस्कोकिलत्वमाप्नोति स चापि नरकाच्युतः ॥
सखिभार्य्यां गुरोर्भार्य्यां राजभार्य्यांश्च पापकृत् ।
प्रधर्षैव हि कामात्मा शूकरो जायते नरः ॥
यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः ॥
पुनर्द्दाता च कन्याया कृमिरेवोपजायते ॥
देवता पितृविप्राणामदत्त्वा योऽन्नमश्नुते ।
प्रमुक्तो नरकात् सोऽपि वायसः सम्प्रजायते ॥
ज्येष्ठं पितृसमं वापि भ्रातरं योऽवमन्यते ।
नरकात् सोऽपि विभ्रष्टः क्रौञ्चयोनौ प्रजायते ॥
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत् ।

सूकरः कृमिको मद्गुश्चण्डालश्च प्रजायते ॥
अकृतज्ञोऽधमः पुंसां विमुक्तो नरकान्नरः ।
कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा ।
मत्स्यस्तु वायसः कूर्म्मः पुक्कशो जायते ततः ॥
अशस्त्रं पुरुषं हत्वा नरः सञ्जायते खरः ॥
कृमिः स्त्रीवधकर्त्ता च बालहन्ता च जायते ॥
भोजनं चोरयित्वा तु मक्षिका जायते नरः ॥
तत्राप्यस्ति विशेषो वै भोजनस्य शृणुष्व तत् ।
हृत्वान्नन्तु स मार्जारो जायते नरकाच्च्युतः ॥
तिलपिण्याकसंमिश्रमन्नं हृत्वा तु मूषिकः ॥
घृतं हृत्वा तु नकुलः काको मद्गुरजामिषम् ॥
मत्स्यमांसापहृत् काकः श्येनो मार्गामिषापहृत् ।
वीचीकाकस्त्वपहृते लवणे दधनि कृमिः ॥
चोरयित्वा पयश्चापि बलाका सम्प्रजायते ॥
यस्तु चोरयते तैलं तैलपायी स जायते ॥
मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः ।
चोरयित्वा तु निष्पावान् जायते गृहगोलकः ॥
आसवञ्चोरयित्वा तु तित्तिरित्वमवाप्नुयात् ॥
अयो हृत्वा तु पापात्मा वायसः सम्प्रजायते ।
हृते कांस्ये च हारीतः कपोतो रूप्यभाजने ।
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥
पत्रोर्णं चोरयित्वा तु क्रकरत्वञ्च गच्छति ।
कोषकारश्च कौषेये हृते वस्त्रेऽभिजायते ॥
दुकूले शार्ङ्गिके पापो हृते चैवांशुके शुकः ।
तथैवाजाविकं हृत्वा वस्त्रं क्षौमञ्च जायते ॥
कार्पासिके हृते क्रौञ्चो वाल्कहर्त्ता बकस्तथा ।
मयूरो वर्णकान् हृत्वा शाकपत्रञ्च जायते ॥
जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः ।
छुछुन्दरिः शुभान् गन्धान् वासो हृत्वा शशो भवेत् ॥
षण्ढः फलापहरणात् काष्ठस्य घुणकीटकः ।
पुष्पापहृद्दरिद्रश्च पङ्गुर्यानापहृन्नरः ॥
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः ।
भूहर्त्ता नरकान् गत्वा रौरवादीन् सुदारुणान्
तृणगुल्मलतावल्लित्वक्सारतरुतां क्रमात् ।
प्राप्य क्षीणाल्पपापस्तु नरो भवति वै ततः ॥
कृमिः कीटः पतङ्गोऽथ पक्षी तोयचरो मृगः ।
गोत्वं प्राप्य च चण्डालपुक्कशादि जुगुप्सितम् ।
पङ्ग्वन्धो बधिरः कुष्ठी यक्ष्मणा च प्रपीड़ितः
मुखरोगाक्षिरोगैश्च गुदरोगैश्च बाध्यते ॥
अपस्मारी च भवति शूद्रत्वं च स गच्छति ॥
एष एव क्रमो दृष्टो गोसुवर्णापहारिणाम् ।
विद्यापहारिणश्चोग्रा निष्क्रयभ्रंशिनो गुरोः ॥
भार्यासन्त्यस्य पुरुषः पारक्यां प्रतिपादयन् ।
प्राप्नोति षण्ढतां मूढ़ो यातनाभ्यः परिच्युतः ॥
यः करोति नरो होममसमिद्धे विभावसौ ।
सोऽजीर्णव्याधिदुःखार्त्तो मन्दाग्निः संप्रजायते" ॥*॥

नानापुराणोक्तकर्म्मविपाकसंक्षेपमाह ।

१ । अकिञ्चनता । यः किल प्रभूतधनवानपि धर्म्मनिन्दको देवाग्निब्राह्मणदरिद्रेभ्यः किञ्चिदपि धनं न दत्तवान् । स तु आयुषोऽवसाने मृतो यमदूतैः प्रपीड़ितो लोलाख्यनरके, सर्व्ववस्तूनि पश्यन्नपि निराशः परमं दुःखमाप्नोति । ततो जन्मान्तरं परिगृह्याकिञ्चनत्वमासाद्य जीर्णवस्त्रधरः बहुना क्लेशेनापि स्वजीविकां निष्पादयेत् ॥

२ । अपुत्त्रता बहुपुत्त्रता च । यस्तु गवीमुखात् भोजनीयद्रव्यं आहृत्य दूरतो विसर्जयेत् । स मन्वन्तरत्रयं निर्जने घोरे मरुप्रभृतिस्थले उषित्वा पुनर्जन्मान्तरं प्राप्य पुत्त्रविहीनो बहुपुत्त्रो वा भवेदिति ॥

३ । अर्शोरोगः । यः खलु पतिव्रतां धर्म्मनियतां ऋतुस्नातां पत्नीं नोपगच्छेत् । यश्च आत्महा भ्रूणहा गोहन्ता च स्यात् । स मृतः गाढ़ान्धतमसावृतं तामिस्राख्यं नरकं गत्वा कर्म्मक्षयम् प्राप्य जन्मान्तरेण पुनर्मानुषयोनिमभिगम्य अर्शोरोगेणाक्रान्तो भवेदिति ॥

४ । अल्पायुःसन्तानता । यो हि तृषार्त्तां वारिपानरतां गां निवारयति । अनेनैव पापेन तस्य अल्पायुषः सन्ताना भवेयुः ॥

५ । अश्मरीरोगः । यस्तु ऋतुस्नातां स्त्रियं क्रोधादप्रीत्या वा नोपगच्छति । स मृतः पूयशोणितसंमिश्रे नरके प्रपीड़ितः पुनर्मानुषत्वं प्राप्य अश्मरीरोगाक्रान्तो जायते इति ॥

६ । उन्मादरोगः । यस्तु ब्राह्मणं वैष्णवं पितरौ द्विजादिकं मानार्हं नार्चयेत् परं निन्देत् स मृतः पुरीषाख्ये नरके अधःशिरा नाना दुःखभाक् भवेत् । ततः कर्म्मक्षये मानुषीं तनुमुपलभ्य उन्मादरोगवान् जायते । तथा येन च ब्राह्मणेषु गुरौ च दम्भाचारः कृतः तेभ्यः स्मृतिभ्रमकराणि द्रव्याणि च दत्तानि सोऽपि जन्मान्तरे उन्मादरोगवान् भवेदिति ॥

७ । कासः । कासस्तु पञ्चविधः । येन कर्म्मणा यद्रूपो भवेत्तदुच्यते । अतिकठोरैर्मिथ्यावाक्यैर्यस्तु लोकं पीड़येत् स पित्तप्रबलकेन कासेन पीड़ितो भवेत् । यो हि ब्राह्मणस्थानविनष्टकारी स वातकासेन पीड़ितो भवेत् । यस्तु जलाशयध्वंसकारी स श्लेष्मकासेन पीड़ितः स्यात् । यो हि ब्रह्म विष्णुं शिवञ्च भेदबुद्ध्या पश्यति स सन्निपातोत्थकासपीड़ितः स्यात् । यज्ञं विना पशुं हत्वा तन्मांसभक्षणकारी सर्व्वदोषोत्थकासेन गृह्यते । यदुक्तं तन्त्रे पुराणे च,—

"अयज्ञेन पशुं हत्वा भुङ्क्ते मांसन्तु यो नरः ।
सर्व्वदोषोत्थकासेन गृह्यते शृणु भूपते!" ॥

८ । कुब्जत्वम् । यदुक्तं पुराणेषु ।

"देवताप्रतिमां दृष्ट्वा यस्तां नैवाभिवादयेत् ।
ब्राह्मणञ्च गुरुं श्रेष्ठं ब्रह्मचारितपस्विनम् ॥
श्मशाने जायते वृक्षः काकगृध्रोपसेवितः ॥
भुक्त्वा कालमशेषञ्च मानुषत्वमवाप्य सः ।
कुब्जत्वमश्नुते तस्मात् कर्म्मणो मानुषं ध्रुवम्" ॥

९ । गर्भस्रावः । या काचित् नारी हिंसापरतन्त्रा सती सपत्न्यादीनामन्यासां स्त्रीणां दुष्टौषधादिभिर्दुर्म्मन्त्रैर्वा गर्भं अपत्यानि च नाशयति सा नरकान्निर्मुक्ता पुनर्मानुषीं योनिमासाद्य पुण्यान्तरेण ऐश्वर्य्यवत्यपि गर्भस्रावदुःखैः प्रपीड़िता भवेत् ।

१० । गलगण्डः । यः खलु मोहाद् गुरुस्त्रीकण्ठदर्शनं कृतवान् । स मृतो यमकिङ्करैः निर्ज्जने प्रान्तरे देशे दिव्यवर्षायुतत्रयं पात्यते । पुनर्जन्म समासाद्य च गलगण्डरोगाक्रान्तः सीदेत् ॥

११ । ग्रहणी । ये च धनलुब्धकाः प्रभूतधनसंग्रहं कृत्वा न यच्छन्ति न चाश्नन्ति न किमपि धर्म्मकार्य्यं कुर्व्वन्ति । तथा ये च परस्वापहारिणः तथा अदुष्टामपतितां भार्य्यां ये च यौवने परित्यजन्ति ते मृताः पूरीषाख्ये नरके कल्पकोटिशतं दग्धाः कर्म्मान्ते मानुषीं योनिमासाद्य ग्रहणीरोगाक्रान्ता अवसीदेयुः ॥

१२ । छिन्ननासिकता । श्रुतिस्मृतिकथाविघ्नकारी देवनिन्दको हि मृत्युं प्राप्य नैरृते पश्चिमे भागे स्थितायां पिङ्गलेति नगर्य्यां पिशाचैः सह बहुकालमुषित्वा महाघोरं दुःखञ्च भुक्त्वा कर्म्मान्ते मानुषयोनिमासाद्य छिन्ननासिको जायते ॥

१३ । छिन्नहस्तता, छिन्नपादता च । यस्तु पितरौ गुरुं विनापराधतो दण्डं वा ताड़येत् स मृतो यमलोके बहूनि कष्टान्यनुभूय छिन्नहस्तश्छिन्नपादो वा इह जायते ॥

१४ । जलोदरः । यदुक्तं पुराणेषु ।

"ब्रह्मविष्णुमहेशेषु भिन्नभावं करोति यः ।
गृह्यते स तु दुष्टात्मा जलोदररुजा ततः" ॥

१५ । दौर्भाग्यम् । येन च सर्व्वासु तृतीयासु वेलासु तैलस्पर्शः क्रियते स दुर्भगत्वमाप्नोतीति ॥

१६ । नेत्ररोगः । दीपहरणकर्त्ता परस्त्रीप्रेक्षकः कामतः पररतिदर्शनकारी च नेत्ररोगेणाक्रान्तो भवेत् ॥

१७ । पक्षरोगः । यो हि सशस्त्रः सन् शस्त्ररहितं पुरुषं हन्ति । स मूढ़ः आयुःशेषे क्रकराख्ये निरये उषित्वा महादुःखेन पच्यते । ततो रासभयोनौ ततः क्रमशो मृगव्याघ्रयोनौ सम्भूय शस्त्रेण हन्यते । ततः सारमेयो भूत्वा मत्स्ययोनौ जायते । ततो मानुषीं योनिमासाद्य अनेनैव रोगेण पीड्यते ॥

१८ । पाण्डुरोगः । यः खलु परभार्य्यारतः परस्त्रीरमणप्रियः स मृतो यमकिङ्करैः बहुधा दुःखं प्रापितः पुनः कर्म्मपाकेन मानुषीं योनिमासाद्य पाण्डुरोगेण लिप्यते ॥

१९ । प्रदरम् । या योषित् बुभुक्षितं पतिं त्यक्त्वा पत्यनुमतिं विना पूर्व्वं भुङ्क्ते सा मृता नरकं भुक्त्वा दशवर्षाणि वायसी ततः. शुकी ततो मानुषी भूत्वा श्वेतप्रदरयुक्ता भवेत् ॥

२० । वन्ध्यता । येन जलपिपासुर्वत्सः प्रतिनिषिद्धः । यस्तु अदक्षिणं व्रतं करोति यो हि मिष्टफलादिकं प्राप्य देवायानिवेद्य भुङ्क्ते यः खलु मैथुनीभावमवलोक्य विघ्नं कुरुते ते सर्व्वे वन्ध्यत्वमाप्नुवन्तीति ॥

२१ । भगन्दररोगः । आचार्य्यभार्य्यागन्तारो नराधमाः स्त्रीबालवृद्धधनापहारिणश्च मृत्युमधि

